as being a manifestation of the Self—the one spirit in which all the little selves lose their individuality—the God the Absolute by Whom all things exist, Who is in all, Who is all."

The Vedanta philosophy is optimistic and universalistic in character. The universe, being but the expression of the Absolute spirit, is essentially good and united by common interest. The feeling of Unity or Solidarity is strong in the Vedanta philosophy, as all men are viewed as but the expression of the same Universal Spirit or Brahman. Our love of humanity is the legitimate outcome of our consciousness of unity with our fellows; it is the practical expression of our regard for the true or Divine Self in us.

Christianity, like all the other great religions of the world, states correctly the moral law in the famous precept, "Love thy neighbour as thyself." But why should I do so? My neighbour is different from myself; and his pleasures and pains are not mine, nor mine his. Dr. Deussen assures us that "the answer is not in the Bible (this venerable book being not yet quite free from Semitic realism), but it is in the *Veda*, is in the great formula *tat tvam asi*, which gives us in three words metaphysics and morals together." And again:—"The highest and purest morality is the immediate consequence of the Vedanta."

According to the Vedanta morality is restricted to the sphere of the relative and the phenomenal.

अविद्यावद्विषयाण्येव प्रत्यक्षादीनि प्रमाणानि शास्त्राणि च । ब्र. सू. भाष्ये १.१.१.

As the essence of morality lies in the conflict between reason and sensibility (गुणा गुणेषु वर्तन्ते), there is left no room for moral restraint, because there is no necessity for it, when sense is transcended.

बुद्धाद्वैतसतत्त्वस्य यथेष्टाचरणं यदि ।
शुनां तत्त्वदृशां चैव को भेदोऽशुचिभक्षणे ॥

—नै. सि. ४.६२.

From the Vedantic standpoint, an individual may thus be liberated even during this mortal life of his (Jivan-mukti). In the Vedanta ethics, religion, and metaphysics are inseparably blended

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

together. The freedom of the will, the immortality of the soul, and the existense of God are, according to Kant, but the postulates of Practical Reason—hypotheses warranted by moral experience, but from the Vedantic standpoint these are as much real as any other fact of personal experience. If Brahman or the Supreme Being is real then with Him these are also realities inseparable from His expressions. Kant regards sensibility as altogether alien to the rational nature of man, and so he insists on its extirpation. The Vedantist, on the other hand, regards sensibility as but a means of the realisation of the true Self. It is the due regulation or control of the senses and passions, योगबुद्धिः, (and not their extirpation) that constitutes the essence of virtue, as it tends to free us from the fetters of this world and to promote our true life in *Brahman*. Thus we may say that the Vedantic ethics is rather austere than ascetic. While Kant's system teaches self-mortification, Vedanta teaches abstemiousness (संयमः). To Kant, a feeling of "inner constraint" enters into the very meaning of duty, so that, "Duty is the action to which a person is bound," it is "compulsion to a purpose unwillingly adopted." To the Vedantist, however, duty is inseparable from life (सहजं कर्म), and it is cheerfully accepted as a means of salvation. To extinguish the impulses would be to render life inoperative. The Vedanta teaches that the Universal order is essentially moral in its tendency तत्त्वपक्षपातो हि स्वभावो धियाम्। (भामती). We are to aim at the purity of the mind, and that we should not at all be mindful of the results, or as they are called the 'fruits' of our actions. The Vedanta is characterised by catholicity and toleration. Every faith or tendency is considered by the Vedantist as having a place in the Universal frame-work. The Universal Spirit is conceived by the Vedantist as essentially True, Good, and Beautiful at the same time (सच्चिदानन्दम्। सत्यात्म, प्राणारामम्, मनआनन्दम्—तै. उ. १.६.). The Absolute as manifested in nature is the Beautiful, as conceived by intelligence is the Supreme Reality

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

or True, and as realised in practice is the Good. *Ânanda* or Blessedness is an indispensable constituent of Brahman, and all creatures struggle not for existence but for happiness. In their own nature they are blissful, for the *Swarûpa* of the Âtman or Self of all is *Ânanda* or Bliss, but through Mâyâ they forget that they are themselves the fountain and storehouse of Bliss. As the two famous verses of the *Taittiriya Upanishad* beautifully put it:—"Bliss is Brahman from Bliss, indeed, are these beings verily born:—By bliss, when born, do they live:—Into Bliss do they, when departing, enter." (3. 6.). Again—"He (Atman) is the Flavour. This one, indeed, having obtained Flavour becomes blessed. Who, indeed, could live, who breathe, should not this Bliss be in the heart? This verily it is that bestows bliss." (2. 7.). Infinite Bliss is the harmonising and comforting agency in the universe, and it is the realisation of this Infinite Bliss pervading and sustaining the Universe, that is man's highest and noblest aspiration and goal.

प्रज्ञाप्रसादमारुह्य अशोच्यः शोचतो जनान् ।
भूमिष्ठानिव शैलस्थः सर्वान्प्राज्ञोऽनुपश्यति ॥

Burdened with our doubts, baffled by our reasons, stumbling all too frequently over our own simplest thoughts, climbing the Hill Difficulty, those of us who have embraced this Divine Philosophy will prize most highly of all those moments when Shri Shankarâchârya's Vedanta takes us by the hand and plants us in a purer air where we can see the Universal Self in our own Self, where the Personal becomes the Impersonal, where Love is Light and Light is Love.

ब्रह्मप्रत्ययसंततिर्जगदतो ब्रह्मैव सत्सर्वतः
पश्याध्यात्मदृशा प्रशान्तमनसा सर्वास्ववस्थास्वपि ।
रूपादन्यदवेक्षितुं किमभितश्चक्षुष्मतां विद्यते
तद्वद्ब्रह्मविदः सतः किमपरं बुद्धेर्विहारास्पदम् ॥
कस्तां परानन्दरसानुभूतिमुत्सृज्य शून्येषु रमेत विद्वान् ।
चन्द्रे महाह्लादिनि दीप्यमाने चित्रेन्दुमालोकयितुं क इच्छेत् ॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

# तैत्तिरीयोपनिषत्सारसंग्रहः

तैत्तिरीयकोपनिषदेवं हि ब्रह्म प्रतिपादयति—

प्रथमं 'ब्रह्मविदाप्नोति परम्' (२.१) इति संहिताद्युपासनादिभिः एकाग्रचित्तमधिकारिणं प्रति ब्रह्मविद्यां सविषयां सफलां सूत्रयामास। 'ब्रह्म' इति विषयनिर्देशः, 'विद्' इत्यनेन विद्या निर्दिश्यते, 'परमाप्नोति' इति विद्याफलं निर्दिश्यते—इति विभागः। तदनन्तरं सूत्रस्यार्थं संक्षेपतः 'सत्यं ज्ञानमनन्तं ब्रह्म। यो वेद निहितं गुहायां परमे व्योमन्। सोऽश्नुते सर्वान् कामान् सह। ब्रह्मणा विपश्चितेति'—अस्या ऋच उदाहरणेन व्याचकार। सत्यमित्यादि सूत्रस्थब्रह्मपदव्याख्यानम्, यो वेदेत्यादि वित्पदव्याख्यानम्, सोऽश्नुत इत्यादि आप्नोतिपदद्वयव्याख्यानमिति विभागः। ऋचोऽयमर्थः—सत्यं कालत्रयबाधाभावोपलक्षितम्, ज्ञानं स्वप्रकाशम्, अनन्तम्—अन्तः परिच्छेदः देशकालवस्तुकृतः, तत्रिविधपरिच्छेदाभावोपलक्षितम्। ब्रह्मेति लक्ष्यनिर्देशः। सत्यादिपदत्रयं लक्षणम्। गुहायां बुद्धौ यत् कारणत्वेन वर्तमानं परमं व्योम अव्याकृताकाशं, तत्र निहितं प्रतिबिम्बिततयाऽवस्थितं यच्चैतन्यं तद्ब्रह्मत्वेन यो वेद स सर्वान् कामान् सार्वभौमादिहिरण्यगर्भान्तान् सह—युगपदश्नुते भुङ्क्ते। केन प्रकारेण?—विपश्चिता—सर्वज्ञेन ब्रह्मणा—सर्वज्ञब्रह्मरूपेण; नोपाधिपरिच्छिन्नरूपेण। ब्रह्मानन्दे स्वल्पानन्दानामन्तर्भावात्, सार्वभौमादिहिरण्यगर्भान्तभोगानां ब्रह्मवित्स्वरूपभूतत्वात्, चैतन्यभास्यत्वाच्च ब्रह्मविदो युगपत्सर्वभोक्तृत्वमित्यर्थः। अनन्तरं ब्रह्मणः सूत्रव्याख्यानरूपया ऋचा उदीरितानन्त्यसिद्धये आकाशादेर्ब्रह्मण एवोत्पत्तिं कथयामास। ततः यो वेदेत्याद्युक्तं ब्रह्मणः प्रत्यक्त्वं 'स वा एष पुरुषोऽन्नरसमयः' इत्यारभ्य देहादिपञ्चकोशात्मोपदेशक्रमेण 'ब्रह्म पुच्छं प्रतिष्ठा' इति पुनर्विस्तरेण प्रतिपादयामास। ततः ब्रह्मणः नामरूपातीतस्य प्रत्यक्षाद्यविषयत्वेन असत्त्वशङ्कायां 'सोऽकामयत' इति कामयितृत्वेन स्वर्गकामिवत्, 'स तपोऽतप्यत' इत्यालोचकत्वेन मन्त्रिवत्, 'इदं सर्वमसृजत' इति स्रष्टृत्वेन कुलालवत्, 'तदेवानुप्राविशत्' इति प्रवेष्टृत्वेन सर्पवच्च सत्त्वमुपपाद्य, पुनश्च 'को ह्येवान्यात्'

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

इत्यादिना सर्वप्राणिनां जीवनहेतुत्वेन, 'यदा ह्येवैष:' इत्यादिना विद्वदविद्वद्भया-भयहेतुत्वेन च तदेव सत्त्वं दृढीचकार। अनन्तरं च 'सैषाऽऽनन्दस्य मीमांसा' इत्यादिनाऽऽनन्दमीमांसामारभ्य सार्वभौमादिहिरण्यगर्भान्तानामानन्दानामुत्तर-शतगुणोत्कर्षप्रदर्शनपूर्वकं ('स यश्चायं पुरुषे' इति वाक्यनिर्दिष्टस्य बुद्ध्यव-च्छिन्नजीवरूपानन्दस्य 'यश्चासावादित्ये' इति वाक्ये आदित्यान्तःस्थत्वेन निर्दिष्टस्य मायावच्छिन्नपरमानन्दस्य च 'स एकः' इति वाक्येनोपाधिद्वयनि-रसनपूर्वकं स्वाभाविकमभिन्नत्वमुपदिश्य) ब्रह्मविदुषः

यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह।
आनन्दं ब्रह्मणो विद्वान्। न बिभेति कुतश्चन॥

इति वाङ्मनसागोचरनिरतिशयब्रह्मानन्दप्राप्तिं निरतिशयानर्थनिवृत्तिं च प्र-तिपाद्य पुनः 'एतं ह वाव' इत्यादिना अनर्थनिवृतिं प्रपञ्चय निरतिशयानन्द-ब्रह्मापरोक्षज्ञाने साधनाकाङ्क्षायां 'भृगुर्वै वारुणिः' इत्यादिना भृगुवरुणसंवादमु-पक्रम्य 'यतो वा' इत्यादिना ब्रह्मणस्तटस्थलक्षणपूर्वकं प्रियाय पुत्राय वरुणेन पित्रा उपदिष्टं तपआख्यं पुनःपुनर्विचारमेव ब्रह्मापरोक्ष्याय मुख्यं साधनमुप-दिश्य ब्रह्मविदस्तृप्तिगानं चान्ते प्रदर्श्य उपरराम **तैत्तिरीयोपनिषत्**। इत्थं तया मातृवत्सर्वप्राणिहितैषिण्या प्रतिपादितं विष्णुं स्तौति द्वाभ्यां श्रीभगवान् भाष्यकारः—

सत्यं ज्ञानं शुद्धमनन्तं व्यतिरिक्तं
शान्तं गूढं निष्कलमानन्दमनन्यम्।
इत्याहादौ यं वरुणोऽसौ भृगवेऽजं
तं संसारध्वान्तविनाशं हरिमीडे॥
कोशानेतान् पञ्च रसादीनतिहाय
ब्रह्मास्मीति स्वात्मनि निश्चित्य दृशिस्थम्।
पित्रा शिष्टो वेद भृगुर्यं यजुरन्ते
तं संसारध्वान्तविनाशं हरिमीडे॥

—हरिस्तुतिः—हरितत्त्वमुक्तावलिः १९–२०

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

## उदाहृतवाक्यग्रन्थनामानि

अथर्वशिखोपनिषत्
अथर्वसंहिता
अमरकोशः
आत्मपुराणम्
आपस्तंबधर्मसूत्रम्
आपस्तंबगृह्यसूत्रम्
आपस्तंबस्मृतिः
आपस्तंबश्रौतसूत्रम्
आश्वलायनश्रौतसूत्रम्
ईशावास्योपनिषत्
उपदेशसाहस्री
ऋक्संहिता
ऐतरेयब्राह्मणम्
ऐतरेयारण्यकम्
कठोपनिषत्
कात्यायनश्रौतसूत्रम
कुतूहलवृत्तिः
कूर्मपुराण–उत्तरभागः
कैवल्योपनिषत्
कौषीतक्युपनिषत्
खण्डनखण्डखाद्यम
गोपथब्राह्मणम्
गौतमधर्मसूत्रम्
गौतमसूत्रम्
छांदोग्योपनिषत
जैमिनिसूत्रम्
जैमिनीयन्यायमालाविस्तारः
तात्पर्यदीपिका
तैत्तिरीयब्राह्मणम्
तैत्तिरीयसंहिता
तैत्तिरीयारण्यकम्
तैत्तिरीयोपनिषद्वार्तिकटीका
तैत्तिरीयोपनिषद्वार्तिकम्
धातुपाठः
निघण्टुः
निरुक्तम्
नृसिंहोत्तरतापनीयोपनिषत्
नैष्कर्म्यसिद्धिः
नैष्कर्म्यसिद्धिचन्द्रिका
न्यायकुसुमाञ्जलिः
न्यायरक्षामणिः
न्यायवार्तिकम्
न्यायसारः
न्यायसारटीका
पञ्चदशी
पाणिनीशिक्षा
पाणिनीसूत्रम्
प्रश्नोपनिषत्
बृहदारण्यकोपनिषत्
बृ. उ. वार्तिकम्
बौधायनगृह्यपरिभाषासूत्रम्
बौधायनगृह्यसूत्रम्

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

ब्रह्मगीता
ब्रह्मविद्याभरणम्
ब्रह्मसूत्रभाष्यम्
ब्रह्मसूत्रम्
भगवद्गीता
भामती
भाष्योत्कर्षदीपिका
मनुस्मृतिः
महानारायणोपनिषत्
महाभाष्यम
माण्डूक्योपनिषत्कारिका
मुद्गलोपनिषत्
मैत्रायणीसंहिता
मोक्षधर्मः
याज्ञवल्क्यस्मृतिः
योगसूत्रम्
योगियाज्ञवल्क्यसंहिता
लिङ्गपुराणम्
वाक्यवृत्तिः
वाणीविलासमुद्रित– तै. उ.
वादनक्षत्रमाला
वाल्मीकिरामायणम्
विवरणप्रमेयसंग्रहः
विवरणम्
विष्णुपुराणम्
शंकरदिग्विजयः
शंकरमिश्रव्याख्या
शतपथब्राह्मणम्
शांकरभाष्यम्
शांखायनश्रौतसूत्रम्
शान्तिपर्व
शाबरभाष्यम्
शास्त्रदीपिका
शिवार्कमणिदीपिका
श्रीकण्ठभाष्यम्
श्रीमद्भागवतम्
श्लोकवार्तिकम्
श्वेताश्वतरोपनिषत्
संक्षेपशारीरकम्
संबंधवार्तिकम्
सामवेदः
सायणभाष्यम्
सिद्धान्तकौमुदी
सूतसंहिता
स्वात्मनिरूपणम्
हरितत्त्वमुक्तावली
हिरण्यकेशिश्रौतसूत्रम

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

# विषयाः



CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri



CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

ॐ तत्सद्ब्रह्मणे नमः ।

## कृष्णयजुर्वेदीयतैत्तिरीयारण्यकान्तर्गता

# तैत्तिरीयोपनिषत्

## आनन्दगिरिकृतटिप्पणसंवलितशांकरभाष्यसमेता ।



### भाष्योपोद्घातः ।

मङ्गलाचरणम्

यस्माज्जातं जगत्सर्वं यस्मिन्नेव प्रलीयते ।
येनेदं धार्यते चैव तस्मै ज्ञानात्मने नमः ॥ १ ॥
यैरिमे गुरुभिः पूर्वं पदवाक्यप्रमाणतः ।
व्याख्याताः सर्ववेदान्तास्तान्नित्यं प्रणतोऽस्म्यहम् ॥ २ ॥

भाष्यस्य संप्रदायपूर्वकत्वम्

तैत्तिरीयकसारस्य मयाऽऽचार्यप्रसादतः ।
विस्पष्टार्थरुचीनां हि व्याख्येयं संप्रणीयते ॥ ३ ॥

---

यत्प्रकाशसुखाभिन्नं यन्मन्त्रेण प्रकाशितम् ।
विवृतं ब्राह्मणे तत्स्यामदृश्यं ब्रह्म निर्भयम् ॥ १ ॥

**यजुर्वेद**—शाखाभेदं तैत्तिरीयकोपनिषदं व्याचिख्यासुर्भगवान्भाष्यकारस्तत्प्रतिपाद्यं ब्रह्म, जगज्जन्मादिकारणत्वेन तटस्थलक्षणेन मन्दमतीन्प्रति सामान्येनोपलक्षितं, सत्यज्ञानादिना च स्वरूपलक्षणेन विशेषतो विनिश्चितं, नमस्कारच्छलेन संक्षेपतो दर्शयति—**यस्माज्जातमिति** । निमित्तोपादानत्वयोः पञ्चम्याः साधारण्यादुभयविधमपि कारणत्वमिह विवक्षितम् । कार्यविलयस्य प्रकृतावेव नियतत्वाद्विशेषतः प्रकृतित्वमाह—यस्मिन्नेवेति । कार्यधारणस्य निमित्तेऽपि धर्मादौ प्रसिद्धत्वात्साधारणकारणत्वमाह—येनेति । ज्ञानात्मन इति स्वरूपलक्षणसूचनम् ॥ १ ॥

गुरुभक्तेर्विद्याप्राप्तावन्तरङ्गसाधनत्वं ख्यापयितुं गुरून्प्रणमति—**यैरिति** । पदानि च वाक्यानि च प्रमाणं चानुमानादि—तद्विवेचनेन व्याख्याता इत्यर्थः ॥ २ ॥

चिकीर्षितं निर्दिशति—**तैत्तिरीयकेति** । व्युत्पन्नस्य पदेभ्य एव पदार्थस्मृतिसंभवात्, पदस्मारितपदार्थानां संसर्गस्यैव वाक्यार्थत्वात्, सूत्रकारेणोपनिषत्तात्पर्यस्य निरूपितत्वाच्च, व्यर्थः पृथग्व्याख्यारम्भ इत्याशङ्क्याऽऽह—**विस्पष्टार्थेति** । मन्दमतीनां स्वत एव निःशे-

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

कर्मकाण्डार्थः नित्यान्यधिगतानि कर्माण्युपात्तदुरितक्षयार्थानि, काम्यानि च फलार्थिनां, पूर्वस्मिन् ग्रन्थे ।

इदानीं कर्मोपादानहेतुपरिहाराय ब्रह्मविद्या प्रस्तूयते । कर्महेतुः कामः स्यात्, प्रवर्तकत्वात् । आप्तकामानां हि कामाभावे स्वात्मन्यवस्थानात्प्रवृत्त्यनुपपत्तिः । आत्मकामत्वे चाऽऽप्तकामता । आत्मा हि ब्रह्म । तद्विदो हि परप्राप्तिं वक्ष्यति । अतोऽविद्यानिवृत्तौ स्वात्मन्यवस्थानं परप्राप्तिः, "अभयं प्रतिष्ठां विन्दते", "एतमानन्दमयमात्मानमुपसंक्रामति" इत्यादिश्रुतेः ।

'ब्रह्मविद्या' उपनिषदर्थः

---

षपदार्थस्मरणासंभवात्, उपनिषद्गतनिःशेषपदार्थानां विशिष्य निःसंशयं ज्ञानं ये रोचयन्ते, तेषामुपकारायेत्यर्थः ॥ ३ ॥

कर्मविचारेणैवोपनिषदो गतार्थत्वात्, उपनिषत्प्रयोजनस्य निःश्रेयसस्य कर्मभ्य एव संभवात्, पृथग्व्याख्यारम्भो न युक्तः—इत्याशङ्कामपनेतुं कर्मकाण्डार्थमाह—नित्यानीति । "अथातो धर्मजिज्ञासा" इति जैमिनिना धर्मग्रहणेन सिद्धवस्तुविचारस्य पर्युदस्तत्वात्, नोपनिषदो गतार्थत्वमित्यर्थः । तानि च कर्माणि सञ्चितदुरितक्षयार्थानि, "धर्मेण पापमपनुदति" इति श्रुतेः, न निःश्रेयसार्थानि । न केवलं जीवतोऽवश्यकर्तव्यान्यधिगतानि, फलार्थिनां काम्यानि च; न तान्यपि निःश्रेयसार्थानि, "स्वर्गकामः", "पशुकामः" इत्यादिवत् "मोक्षकामोऽदः कुर्यात्" इत्यश्रवणात्; अतः संसार एव कर्मणां फलमित्यर्थः ।

कर्मकाण्डार्थमुक्त्वा तत्राविचारितमुपनिषदर्थमाह—इदानीमिति । कर्मण उपादानेऽनुष्ठाने यो हेतुस्तन्निवृत्त्यर्थं ब्रह्मविद्याऽस्मिन्ग्रन्थे प्रारभ्यते । अतः सनिदानकर्मोन्मूलनार्थत्वादुपनिषदः कर्मकाण्डविरुद्धत्वान्न गतार्थत्वमित्यर्थः । कर्मानुष्ठाने हेतुर्नियोगः, तस्य प्रमाणसिद्धत्वान्न विद्यया विरोध इत्याशङ्क्याऽऽह—कर्महेतुरिति । अस्येदं साधनमित्येतावच्छास्त्रेण बोध्यते; यस्य तत्राभिलाषः, स तत्र प्रवर्तते कामत एव । अतो न नियोगस्य प्रवर्तकत्वसंभावनाऽपीत्यर्थः । सति कामे प्रवृत्तिरित्यन्वय उक्तः । कामाभावे न प्रवृत्तिरिति व्यतिरेकमाह—आप्तेति । अभिलषितविषयप्राप्तिः कामनिवृत्तेर्हेतुः, न विद्या । अतः कथं कर्महेतुपरिहाराय विद्यारम्भः ?—इत्याशङ्क्याऽऽह—आत्मकामत्वे चेति । कामितविषयप्राप्तौ कामस्योत्कलिकोपशममात्रं, न तूच्छेदः, पुनर्विषयाकाङ्क्षादर्शनात् ।

---

(१) बृ. उ. ४-४-६, ५ (२) तै. उ २-१-१ (३) २-७-१ (४) २-८-१. (५) जै. सू. १-१-१ (६) महाना. उ. २२-१ (७) तै. सं. २-५-६; ७.४-१. ताण्ड्यमहाब्राह्मणे १६-३-३- (८) ताण्ड्यमहाब्राह्मणे २१-६-२. तै. सं. २-४-६.

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

काम्यप्रतिषिद्धयोरनारम्भात्, आरब्धस्य चोपभोगक्षयात्, नित्यानुष्ठानेन प्रत्यवायाभावात्, अयत्नत एव स्वात्मन्यवस्थानं मोक्षः; अथवा निरतिशयायाः प्रीतेः स्वर्गशब्दवाच्यायाः कर्महेतुत्वात्, कर्मभ्य एव मोक्षः--इति चेत्,--

मीमांसकाः--केवलकर्मणां मोक्षसाधनत्वम्

न, कर्मानेकत्वात्। अनेकानि ह्यारब्धफलान्यनारब्धफलानि चानेकजन्मान्तरकृतानि विरुद्धफलानि कर्माणि संभवन्ति--इत्यतस्तेष्वनारब्धफलानामेकस्मिञ्जन्मन्युपभोगक्षयासंभवात्, शेषकर्मनिमित्तशरीरारम्भोपपत्तिः। कर्मशेषसद्भावसिद्धिश्च, "तद्य इह रमणीयचरणाः", "ततः शेषेण" इत्यादिश्रुतिस्मृतिशतेभ्यः। इष्टानिष्टफलानामनारब्धानां क्षयार्थानि नित्यानि--इति चेन्न, अकरणे प्रत्यवायश्रवणात्; प्रत्यवायशब्दो ह्यनिष्टविषयः; नित्याकरणनिमित्तस्य प्रत्यवायस्य दुःखरूपस्याऽऽगामिनः परिहारार्थानि नित्यानीत्यभ्युपगमात्, नानारब्धफलकर्मक्षयार्थानि। यदि नामानारब्धफलकर्मक्षयार्थानि नित्यानि कर्माणि, तथाऽप्यशुभमेव क्षपयेयुः न शुभम्, विरोधाभावात्। नहि, इष्टफलस्य कर्मणः शुद्धिरूपत्वात्, नित्यैर्विरोध उपपद्यते, शुद्ध्यशुद्ध्योर्हि विरोधो युक्तः।

तत्खण्डनम्

---

आप्तकामताऽपि निरङ्कुशा,—आत्मैव वस्तु, नान्यत्ततोऽस्तीत्येवंरूपा—आत्मकामत्वे सति, भवति; कामयितव्याभावादेव। आत्मानं ह्यद्वयानन्दरूपमजानन्नेव व्यतिरिक्तं विषयं पश्यन्कामयते। ततः कामस्याऽऽत्माविद्यामूलत्वात्, आत्मविद्यैव तन्निवृत्तिहेतुरित्यर्थः। भवत्वात्मविद्या कामविरोधिनी, कर्महेतुपरिहाराय ब्रह्मविद्या प्रस्तूयते—इति कथमुक्तं? तत्राऽऽह—आत्मेति। आनन्दमयं परमात्मानमादाय श्रुतिरुदाहृता।

एवं तावत्कर्मकाण्डेनागतार्थत्वात्, कर्मभ्योऽसंभाव्यमाननिःश्रेयसप्रयोजनत्वाच्च, उपनिषदो व्याख्यारम्भं संभाव्य, पुनरनारम्भवादिनोऽभिप्रायमुद्भावयति—काम्यप्रतिषिद्धयोरिति। आत्यन्तिकागामिशरीराद्यनुत्पादे स्वरूपावस्थानं निःश्रेयसम्, शरीराद्यनुत्पादश्च हेत्वभावादेव सेत्स्यति, किं ज्ञानार्थोपनिषदारम्भेण?—इत्यर्थः। मतान्तरमाह—अथवेति। यदेव स्वर्गसाधनं ज्योतिष्टोमादि तदेव मोक्षसाधनं, निरतिशयप्रीतेः स्वर्गपदार्थस्य मोक्षादन्यत्रासंभवात्, सति शरीरे क्लेशस्यावश्यंभावादित्यर्थः। ऐकभविकपक्षमाद्यमतं प्रत्याख्याति—

---

(१) छां. उ. ५-१०-७ (२) अनेन "वर्णा आश्रमाश्च स्वकर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय ततः शेषेण विशिष्टदेशजातिकुलरूपायुःश्रुतवृत्तवित्तसुखमेधसो जन्म प्रतिपद्यन्ते"—इति गौ. ध. सू. २.११-२९ एव ग्रहीतव्यम्; न आप. ध. सू. २-२-३ "ततः परिवृत्तौ कर्मफलशेषेण जातिं, रूपं, वर्णं, मेधां, प्रज्ञां द्रव्याणि, कर्मानुष्ठानम्,,—इति प्रतिपद्यते। तच्चक्रवदुभयोर्लोकयोः सुख एव वर्तते"—इति।

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

न च, कर्महेतूनां कामानां ज्ञानाभावे निवृत्त्यसंभवात्, अशेषकर्मक्षयोपपत्तिः। अनात्मविदो हि कामः, अनात्मफलविषयत्वात्; स्वात्मनि च कामानुपपत्तिर्नित्यप्राप्तत्वात्; स्वयं चाऽऽत्मा परं ब्रह्मेत्युक्तम्। नित्यानां चाकरणमभावः, ततः प्रत्यवायानुपपत्तिः—इत्यतः पूर्वोपचितदुरितेभ्यः प्राप्यमाणायाः प्रत्यवायक्रियाया नित्याकरणं लक्षणम्—इति "अकुर्वन्विहितं कर्म"–इति शतुर्नानुपपत्तिः।

---

नेत्यादिना। यद्यपि वर्तमाने देहे काम्यं प्रतिपिद्धं च नाऽऽरभेत मुमुक्षुः, तथाऽपि सञ्चितस्यानेकस्य संभवाद्, हेत्वभावोऽसिद्ध इत्यर्थः। प्रायणेनाभिव्यक्तानि सर्वाण्येव कर्माणि संभूयैकं शरीरमारभन्ते, तत्र सर्वेषामुपभोगेनैव क्षपितत्वात्, सञ्चितं कर्मैव नास्तीति शङ्कानिराकरणायोक्तम्—विरुद्धफलानीति। स्वर्गनरकफलानां ज्योतिष्टोमब्रह्महत्यादीनामेकस्मिन्देहे भोगेन क्षयासंभवाद्, प्रायणस्य सर्वाभिव्यञ्जकत्वे प्रमाणाभावात्, बलवता प्रतिबद्धस्य दुर्बलस्यावस्थानं संभवतीत्यर्थः। संभावनामात्रमेतद्, नात्रप्रमाणमस्तीत्याशङ्क्याऽऽह—कर्मशेषेति। "प्रेत्य स्वकर्मफलमनुभूय ततः शेषेण......जन्म प्रतिपद्यन्ते" इति स्वर्गादवरोहतां कर्मशेषसद्भावं दर्शयतीत्यर्थः। सञ्चितकर्मसद्भावमङ्गीकृत्य, देहान्तरारम्भो न भविष्यतीत्याह—इष्टेति। एतद्भ्राष्टानां सिद्धान्तविरुद्धमित्याह—नेति। मुमुक्षुणाऽनुष्ठितस्य नित्यादेः सञ्चितकर्मक्षयार्थत्वाभ्युपगमेऽपि नाभिमतसिद्धिरित्याह—यदि नामेति।

यच्चोक्तं—मुमुक्षुः काम्यानि वर्जयेत्—इति तदप्यसति विवेकबले दुर्घटम्, सति मूलाज्ञाने कामोद्भवस्य दुर्निवारत्वादित्याह—न च, कर्महेतूनामिति। ननु—कामो नाज्ञानमूलः, आत्मविदामपि कामदर्शनादित्यत आह—स्वात्मनि चेति। सर्वमात्मेति पश्यतां तत्त्वतो विषयाभावादेव कामानुपपत्तिः। अशनादिप्रवृत्तिनिमित्तं तु कामाभास एव, वास्तवाभिनिवेशाभावादित्यर्थः। तेषामप्यर्चिरादिमार्गेण ब्रह्मप्राप्तिकामनाऽस्ति—इति नाऽऽशङ्कनीयमित्याह—स्वयं चेति। यच्चोक्तम्—अकरणनिमित्तप्रत्यवायपरिहारार्थानि नित्यानि—इति तत्राऽऽह—नित्यानां चेति। आगामि दुःखं प्रत्यवाय उच्यते। तस्य भावरूपस्य नाभावो निमित्तम्; "पापः पापेन" इति श्रुतेः निषिद्धाचरणनिमित्तकत्वाद्दुःखस्येत्यर्थः।

"अकुर्वन्विहितं कर्म निन्दितं च समाचरन्।
प्रसज्जंश्चेन्द्रियार्थेषु नरः पतनमृच्छति॥"

इति शतृप्रत्ययादकरणस्यापि निमित्तत्वमवगतमित्याशङ्क्याऽऽह—अतः पूर्वेति। यदि यथावन्नित्यनैमित्तिकानुष्ठानमभविष्यद्, तदा सञ्चितदुरितक्षयोऽभविष्यद्; न चायं विहितमकार्षीद्, अतः प्रत्यवायी भविष्यति—इति शिष्टैर्लक्ष्यते,–यथा 'अविचिकित्सञ्छ्रोत्रियः' इति। ततः शतृप्रत्ययस्यान्यथाप्युपपन्नत्वाद्, न तद्बलादकरणस्य हेतुत्वमवगन्तुं शक्यत इत्यर्थः।

---

(१) मनु. स्मृ. ११-४४ तत्र 'प्रायश्चित्तीयते नरः'–इति चतुर्थचरणः; याज्ञवल्क्यस्मृतौ ३-२१९ 'विहितस्य'–इत्यादिश्लोकस्य चतुर्थचरणः 'नरः पतनमृच्छति' इति। (२) बृ. उ. ४-४-५.

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

अन्यथा ह्यभावाद्भावोत्पत्तिः--इति सर्वप्रमाणव्याकोपः, इत्यतोऽयत्नतः स्वात्मन्यवस्थानमित्यनुपपन्नम् ।

यच्चोक्तं--निरतिशयप्रीतेः स्वर्गशब्दवाच्यायाः कर्मनिमित्तत्वात्कर्मारब्ध एव मोक्षः--इति तन्न, नित्यत्वान्मोक्षस्य । नहि नित्यं किञ्चिदारभ्यते लोके, यदारब्धं तदनित्यम्, इत्यतो न कर्मारभ्यो मोक्षः ।

विद्यासहितानां कर्मणां नित्यारम्भसामर्थ्यम्--इति चेन्न,--विरोधात्; 'नित्यं' च 'आरभ्यते' इति च विरुद्धम् । यद्धि नष्टं तदेव नोत्पद्यते--इति प्रध्वंसाभाववन्नित्योऽपि मोक्ष आरभ्य एव--इति चेन्न,--मोक्षस्य भावरूपत्वात् । प्रध्वंसाभावोऽप्यारभ्यत इति--अभावस्य विशेषाभावात्--विकल्पमात्रमेतत् । भावप्रतियोगी ह्यभावः ।

विद्याकर्मसमुच्चयवादनिरासः

---

ननु—"लक्षणहेत्वोः क्रियायाः"[1] इति शतृप्रत्ययस्योभयत्र विधाने सति, किमिति हेतुत्वमेव न गृह्यते ? तत्राऽऽह—अन्यथेति । भावरूपस्य कार्यस्य भावरूपमेव कारणमिति प्रत्यक्षादिभिरवधारितं, शतृप्रत्ययादभावस्य हेतुत्वाभिधाने सर्वप्रमाणविरोधः स्यादित्यर्थः । ननु—त्वयाऽप्यकरणस्य प्रत्यवायलक्षकत्वमिष्टम्; भाट्टैश्चानुपलम्भस्याभावप्रमितिहेतुत्वमिष्यते; तार्किकैश्च प्रतिबन्धकाभावस्य, तत्तत्प्रागभावस्य च, तत्तत्कार्यव्यवस्थापकत्वमिष्यते; तत्कथं भावस्यैव कारणत्वम् ? तदुक्तम्—"भावो यथा तथाऽभावः कारणं कार्यवन्मतः"[2] इति । उच्यते—अस्माभिस्तावदभावस्य स्वरूपेण कारणत्वं नेष्टम् । किंतु तज्ज्ञानस्य प्रत्यवायगमकत्वमिष्टम् । तेन च रूपेण न प्रत्यवायजनकत्वमिष्यते, नित्याकरणाज्ञाने प्रत्यवायाभावप्रसङ्गात् । भाट्टानामपि च केषांचिज्ज्ञातस्य योग्यानुपलम्भस्याभावप्रमितिहेतुत्वम्, सत्तया तु प्रमितिहेतुत्वेऽभावप्रमायाः प्रत्यक्षत्वापातः । तार्किकाणामपि प्रतिबन्धकाभावस्य कारणत्वेऽन्योन्याश्रयत्वप्रसङ्गात्, न प्रामाणिकत्वम् । प्रागभावस्यापि ज्ञातरूपेण जन्मज्ञापकत्वमेव—यस्मादिदं प्राङ् नाऽऽसीत्तस्मादिदानीं जातमिति—न तु जनकत्वम् । प्रागभावस्य नियतप्राग्भावित्वेन कारणत्वे प्राक्कालस्य स्ववृत्तितापातः । प्राग्भावित्वमपि चान्यथासिद्धमित्युक्तं तत्त्वालोके[3] । यस्मादकरणनिमित्तप्रत्यवायपरिहारार्थं न नित्यं कर्म, किंतु "कर्मणा पितृलोकः"[4], "सर्व एते पुण्यलोका भवन्ति"[5] इति श्रुतेः पितृलोकप्राप्तिफलम्, तस्मान्न यथोक्तचरितस्य शरीरानुत्पाद इत्याह—इत्यत इति ।

द्वितीयमतमनूद्य दूषयति—यच्चोक्तमित्यादिना । विद्यासहितेनापि कर्मणाऽऽरभ्यश्चेन्मोक्षः, तर्ह्यनित्य एव—यत्कृतकं तदनित्यमिति व्याप्तिदर्शनात्—इत्युक्तम्; तत्र व्याप्तिभङ्गं

---

(१) पा. सू. ३-२-१२६ (२) न्यायकुसुमाञ्जलिः १-१० (३) न्यायकुसुमाञ्जलिः ३-२० (४) बृ. उ. १-५-१६ (५) छां. उ. २-२३-२.

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

यथा ह्यभिन्नोऽपि भावो घटपटादिभिर्विशेष्यते भिन्न इव—घटभावः पटभाव इति,—एवं निर्विशेषोऽपि भावाभावः क्रियागुणयोगाद्द्रव्यादिवद्विकल्प्यते। न ह्यभाव उत्पलादिवद्विशेषणसहभावी, विशेषणवत्त्वे भाव एव स्यात्। विद्याकर्मकर्तृनित्यत्वाद्विद्याकर्मसन्तानजनितमोक्षस्य नित्यत्वम्—इति चेन्न, गङ्गास्रोतोवत्तत्कर्तृत्वस्य दुःखरूपत्वात्; कर्तृत्वोपरमे च मोक्षविच्छेदात्। तस्मादविद्याकामकर्मोपादानहेतुनिवृत्तौ स्वात्मन्यवस्थानं मोक्ष इति। स्वयं चाऽऽत्मा ब्रह्म, तद्विज्ञानादविद्यानिवृत्तिर्मोक्षः—इत्यतो ब्रह्मविद्यार्थोपनिषदारभ्यते।

---

मन्वानः शङ्कते—यद्धि नष्टमिति। भावरूपत्वादिति—यद्भावरूपं कार्यं तदनित्यमिति व्याप्तेः, तत्त्वं च मोक्षस्य निरतिशयप्रीतेर्भावत्वादनित्यत्वं स्यादेवेत्यर्थः। प्रध्वंसाभावस्य कार्यत्वमभ्युपगम्य यत्प्रध्वंसातिरिक्तं कार्यं तदनित्यमिति व्याप्तिर्व्याख्याता। परमार्थतस्तु प्रध्वंसस्य कार्यत्वमपि नास्तीत्याह—प्रध्वंसेति। जन्याश्रयत्वं तावत्प्रध्वंसस्य न कार्यत्वम्, जनेर्नैरुक्तैर्भावविकारत्वाभ्युपगमात्; नापि प्रागसतः सत्तासमवायादिलक्षणम्, तदनभ्युपगमात्; नाप्युत्तरकालयोगः, कालेन संबन्धाभावात्, अवच्छेद्यावच्छेदकभावस्य संबन्धान्तरमूलकत्वदर्शनात्; उत्तरकालस्य प्रध्वंसावच्छेदकत्वं स्वभावश्चेत्, अन्यावच्छेदकत्वं स्वभावो न स्यात्; तस्मादभावस्य निर्विशेषत्वात्, कार्यत्वं कल्पनामात्रमिति भावः। किंच, अभावस्य भावनिषेधमात्रस्वभावत्वात्, भावविरोधित्वाच्च, न भावरूपो धर्मः संभवतीत्याह—भावेति।

ननु—अभावश्चतुर्विधः; तत्रानित्यः प्रागभावः, प्रध्वंसादयस्तु नित्याः; ततः कथं निर्विशेषत्वमित्याशङ्क्याऽऽह—यथा हीति। विधिप्रत्ययस्यैकाकारत्वादेक एव भावो यथावच्छेदकभेदाद्भिन्न इव प्रकाशते, तथा निषेधप्रत्ययस्यैकाकारत्वात्, एक एवाभावोऽवच्छेदकभेदाद्भिन्न इव प्रकाशते—जायते, नश्यति चेति क्रियायोगात्संख्यागुणयोगाद्द्रव्यवद् विकल्प्यते,—न तु तत्त्वतः सविशेष इत्यर्थः। इतश्च न तत्त्वतः सविशेष इत्याह—नहीति। विशेषणं हि विशेष्यान्वयि प्रसिद्धम्। प्रतियोगिना च विशेषणेन नाभावस्य सहभावोऽस्ति; घटप्रध्वंसस्य नित्यत्वे, घटस्यापि नित्यत्वप्रसङ्गात्। घटसहभावित्वे च तदभावत्वव्याघातात्, भावाभावयोः सहानवस्थानरूपविरोधाभ्युपगमात्। ततः प्रतियोगिविशेषादभावः सविशेषः, कार्यत्वादिधर्मवान्—इति विभ्रममात्रमित्यर्थः। एवं प्रध्वंसदृष्टान्तेन शङ्कितं नित्यत्वं परिहृत्य, प्रकारान्तरेणाऽऽशङ्क्य निषेधति—विद्याकर्मेत्यादिना। विद्याकर्मणोः कर्ता नित्यः—इति साधनसान्तत्यात्साध्यसान्तत्यं न वाच्यम्। कर्तृत्वस्यानुपरमेऽनिर्मोक्षप्रसङ्गात्, उपरमे च साधनसान्तत्याभावान्मोक्षस्य विच्छित्तिः स्यादित्यर्थः। यस्मान्निःश्रेयसं ब्रह्मज्ञानं विना दुष्प्रापं, तस्मादित्युपसंहारः।

---

(१) तद्धन्मो० इति पाठान्तरम्। (२) "षड्भावविकारा भवन्तीति वार्ष्यायणिः—जायते, अस्ति, विपरिणमते, वर्धते, अपक्षीयते, विनश्यति"—इति निरुक्ते १-२. (३) भावप्रत्यय—इति पाठान्तरम्।

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

## अथ शिक्षावल्ल्या प्रथमोऽनुवाकः

( शान्तिः )

हरिः ॐ । शं नो मित्रः शं वरुणः । शं नो भवत्वर्यमा ।
शं न इन्द्रो बृहस्पतिः । शं नो विष्णुरुरुक्रमः ।
नमो ब्रह्मणे । नमस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्मासि ।
त्वमेव प्रत्यक्षं ब्रह्म वदिष्यामि । ऋतं वदिष्यामि ।
सत्यं वदिष्यामि । तन्मामवतु । तद्वक्तारमवतु । अवतु
माम् । अवतु वक्तारम् । ॐ शान्तिः शान्तिः शान्तिः ( १[1] ) ॥
सत्यं वदिष्यामि पञ्च च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि शिक्षावल्ल्यां प्रथमोऽनुवाकः ॥ १ ॥

---

उपनिषदिति विद्योच्यते—तच्छीलिनां गर्भजन्मजरादिनिशातनात्, तदवसादनाद्वा, ब्रह्मणो वोपनिगमयितृत्वात्, उपनिषण्णं वाऽस्यां परं श्रेय इति; तदर्थत्वाद्ग्रन्थोऽप्युपनिषत् ।

(उपनिषन्निर्वचनम्)

---

शं सुखं प्राणवृत्तेरह्नश्चाभिमानी देवतात्मा मित्रो नोऽस्माकं भवतु । तथैवापानवृत्ते रात्रेश्चाभिमानी वरुणः; चक्षुष्यादित्ये चाभिमानी अर्यमा; बले—बाह्वोः—इन्द्रः; वाचि, बुद्धौ च बृहस्पतिः; विष्णुरुरुक्रमो विस्तीर्णक्रमः पादयोरभिमानी; एवमाद्याध्यात्मदेवताः । 'शं नो भवतु' इति

(विद्याविघ्नशान्तिप्रार्थना)

---

ब्रह्मविद्यायामुपनिषच्छब्दप्रसिद्धिरपि विद्याया एव निःश्रेयससाधनत्वे प्रमाणमित्याह—उपनिषदिति । निशातनाच्छिथिलीकरणादित्यर्थः । अस्यां विद्यायां निमित्तभूतायां परं श्रेयो ब्रह्म जीवस्योपनिषण्णम्—आत्मतयोपस्थितं भवतीत्यर्थः ।

---

एवमुपनिषदो व्याख्यारम्भं संभाव्य, प्रतिपदव्याख्यामारभते—शं सुखमित्यादिना । शं नो भवत्विति—सुखकृद्भवत्वित्यर्थः । अध्यात्मप्राणकरणाभिमानिनीनां देवतानां सुखकृत्त्वं

---

( १ ) वाक्यदशकबोधकोऽयमङ्कः । एवमग्रेऽपि बोध्यम् । ( २ ) एतदनुवाकगतवाक्यदशकसङ्कलनार्थं तत्तद्वाक्यदशकान्तिमपदगणनम् । एवं प्रत्यनुवाकसमाप्तौ ज्ञेयम् । तदेतद्वाक्यसंग्रहणमनुवाकेषु वाक्यानां निक्षेपप्रक्षेपनिबन्धनन्यूनाधिक्यवारणाय पूर्वाचार्यैः प्रोक्तम्, अधीयते चाद्यापि स्वाध्यायवत् । ( ३ ) अस्या एव 'सांहित्युपनिषत्'—इति नामान्तरम् ।

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

सर्वत्रानुषङ्गः। तासु हि सुखकृत्सु, विद्याश्रवणधारणोपयोगा अप्रतिबन्धेन भविष्यन्ति,—इति तत्सुखकर्तृत्वं प्रार्थ्यते—'शं नो भवतु' इति।

ब्रह्म विविदिषुणा नमस्कारब्रह्मवदनक्रिये वायुविषये ब्रह्मविद्योपसर्गशान्त्यर्थं क्रियेते, सर्वक्रियाफलानां तदधीनत्वात्। ब्रह्म वायुस्तस्मै ब्रह्मणे, नमः प्रह्वीभावं, करोमीति वाक्यशेषः; नमस्ते तुभ्यं हे वायो; नमस्करोमीति परोक्षप्रत्यक्षाभ्यां वायुरेवाभिधीयते। किंच त्वमेव, चक्षुराद्यपेक्ष्य बाह्यं, संनिकृष्टमव्यवहितं प्रत्यक्षं ब्रह्मासि यस्मात्, तस्मात्त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि। ऋतं यथाशास्त्रं यथाकर्तव्यं बुद्धौ सुपरिनिश्चितमर्थं, तदपि त्वदधीनत्वात्, त्वामेव वदिष्यामि। सत्यमिति—स एव वाक्कायाभ्यां संपाद्यमानोऽर्थः, सोऽपि त्वदधीन एव संपाद्यः—इति त्वामेव सत्यं वदिष्यामि। तत् सर्वात्मकं वाय्वाख्यं ब्रह्म मयैवं स्तुतं सन्मां विद्यार्थिनमवतु विद्यासन्नियोजनेन; तदेव ब्रह्म वक्तारमाचार्यं वक्तृत्वसामर्थ्यसंयोजनेन। 'अवतु मामवतु वक्तारम्' इति पुनर्वचनमादरार्थम्। 'शान्तिः शान्तिः शान्तिः' इति त्रिर्वचनमाध्यात्मिकाधिभौतिकाधिदैविकानां विद्याप्राप्त्युपसर्गाणां प्रशमनार्थम्॥

वायुरूपेण प्रत्यक्षस्य-अन्तर्यामित्वेन प्रेरकस्य ब्रह्मण एव नमस्कारवदनक्रिये

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवतः कृतौ तैत्तिरीयोपनिषच्छिक्षावल्लीभाष्ये प्रथमोऽनुवाकः॥ १॥

---

किमिति प्रार्थ्यते?—तत्राऽऽह—तासु हीति। श्रवणं—गुरुपादोपसर्पणपूर्वकं वेदान्तानां तात्पर्यावधारणम्। धारणं—श्रुतस्याविस्मरणम्। उपयोगः—शिष्येभ्यो निवेदनम्।

अन्यद्ब्रह्म वायुश्चान्य इति नाऽऽशङ्कनीयमित्याह—परोक्षेति। ब्रह्मणे इति। पारोक्ष्येण '[1]स ब्रह्म त्यदित्याचक्षते' इति श्रुतेः, वायुशब्देन च प्रत्यक्षतया निर्देशः, प्राणस्य प्रत्यक्षत्वादित्यर्थः। यद्यपि सूत्रात्मरूपेण वायुः परोक्षः, तथाऽप्याध्यात्मिकप्राणरूपेण ब्रह्मशब्दवाच्यत्वेऽप्यपरोक्षत्वमित्याह—किं चेति। बाह्यं चक्षुरादि, रूपदर्शनाद्यनुमेयत्वात्, व्यवहितम्। प्राणस्त्वव्यवधानेन साक्षिवेद्यः सन्निहितश्च भोक्तुरिति चक्षुराद्यपेक्षया प्रत्यक्ष इत्यर्थः। बृंहणाद्ब्रह्म—प्राणकृतेन ह्यशनादिना शरीरादेर्बृंहणं प्रसिद्धमित्यर्थः। यथा [2]राज्ञो दौवारिकं कश्चिद्राजदिदृक्षुराह 'त्वमेव राजा' इति, तथा हार्दस्य ब्रह्मणो द्वारपं प्राणं हार्दं ब्रह्म दिदृक्षुर्मुमुक्षुराह—त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामीति। ब्रह्मवदनक्रिया प्राणदेवतायाः स्तुत्यर्था। स्तुत्यन्तरमाह—ऋतमित्यादिना॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दज्ञानविरचिते तैत्तिरीयोपनिषच्छांकरभाष्यटिप्पणे शिक्षावल्ल्यां प्रथमोऽनुवाकः॥ १॥

---

(१) बृ. उ. ३-९-९ (२) विष्णु. पु. १-१२-५७; ३-३-२१.

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

## अथ शिक्षावल्ल्यां द्वितीयोऽनुवाकः ।

### ( शिक्षाध्यायः )

ॐ शीक्षां व्याख्यास्यामः । वर्णः स्वरः । मात्रा बलम् । साम संतानः । इत्युक्तः शीक्षाध्यायः ( १ ) ॥

शीक्षां पञ्च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि शिक्षावल्ल्यां द्वितीयोऽनुवाकः ॥ २ ॥

---

(दृष्टादृष्टोपकारी ग्रन्थपाठनियमो विहितः ।)

अर्थज्ञानप्रधानत्वादुपनिषदो ग्रन्थपाठे यत्नोपरमो मा भूत्, इति 'शीक्षाध्यायः' आरभ्यते । 'शीक्षा'– शिक्ष्यतेऽनयेति वर्णाद्युच्चारणलक्षणम्; शिक्ष्यन्त इति वा 'शिक्षा'–वर्णादयः, शिक्षैव शीक्षा, दैर्घ्यं छान्दसम् । तां शीक्षां व्याख्यास्यामो वि स्पष्टम् आ समन्तात्कथयिष्यामः । चक्षिङः ख्याञादिष्टस्य व्याङ्पूर्वस्य व्यक्तवाक्कर्मण एतद्रूपम् । तत्र वर्णोऽकारादिः । स्वर उदात्तादिः । मात्रा ह्रस्वाद्याः । बलं प्रयत्नविशेषः । साम वर्णानां मध्यमवृत्त्योच्चारणं–समता । सन्तानः सन्ततिः–संहितेत्यर्थः । एष हि शिक्षितव्योऽर्थः । शीक्षा यस्मिन्नध्याये सोऽयं 'शीक्षाध्यायः' इत्येवमुक्त उदितः; उक्त इत्युपसंहार उत्तरार्थः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवतः कृतौ तैत्तिरीयोपनिषच्छिक्षावल्लीभाष्ये द्वितीयोऽनुवाकः ॥ २ ॥

---

यत्नोपरम इति—स्वरोष्मव्यञ्जनादिप्रमादो मा भूत्, अन्यथा विवक्षितार्थसिद्धिरेव न स्यात् । तदुक्तम्—

" मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह ।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥ "—इति ।

लक्षणमिति । लक्षणं शास्त्रम्–'ऋटुरषाणां मूर्धा', 'इचुयशानां तालु'–इत्यादि ।

---

( १ ) पाणिनिशिक्षा ५२; पा. महाभा. १-१-१. सच वाग्वज्रमंत्रः ' इन्द्रशत्रुर्वर्द्धस्व ' इति तै. संहितायामसकृच्छ्रुतः–२-४-१२-१; ५-२-१; शतपथब्रा. १-५-२-१० इन्द्रशत्रुरिति पदे इन्द्रः शत्रुः शातयिता ( मारयिता ) यस्येति बहुव्रीहौ आद्यपदोदात्तत्वम्, यथा ' इन्द्रशत्रुः,' तेन चेन्द्रस्य शातनकर्तृत्वं बोध्यते; इन्द्रस्य शत्रुरिति षष्ठीतत्पुरुषपक्षेऽन्त्यपदोदात्तत्वम्, यथा 'इन्द्रशत्रुः,' तेन चेन्द्रस्य शातनकर्मतयाऽवगमः । ' सोऽयं मन्त्रगतः स्वरापराधः । अपराधाभावे सति, उन्नतया ज्वालया यजमानस्य कार्यसिद्धिः सूचिता भवति । अपराधे त्ववनतया ज्वालया यजमानस्य कार्यसिद्ध्यभावः सूच्यते '। इति तै० सं० २. ४. १२. १ सा० भाष्ये । ( २ ) ? पाणिनिशि० १६-१८; सि. कौमुदी. १०

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

## अथ शिक्षावल्ल्यां तृतीयोऽनुवाकः ।

### ( संहितोपासनम् )

सह नौ यशः । सह नौ ब्रह्मवर्चसम् ।

अथातः सꣳहिताया उपनिषदं व्याख्यास्यामः । पञ्चस्वधिकरणेषु । अधिलोकमधिज्यौतिषमधिविद्यमधिप्रजमध्यात्मम् । ता महासꣳहिता ईत्याचक्षते ।

अधुना संहितोपनिषदुच्यते । तत्र संहिताद्युपनिषत्परिज्ञाननिमित्तं यद् 'यशः' प्राप्यते, तन्नौ—आवयोः शिष्याचार्ययोः सहैवास्तु । तन्निमित्तं च यद्ब्रह्मवर्चसं तेजः, तच्च सहैवास्तु, इति शिष्यवचनमाशीः । शिष्यस्य ह्यकृतार्थत्वात्प्रार्थनोपपद्यते, नाऽऽचार्यस्य—कृतार्थत्वात्,—कृतार्थो ह्याचार्यो नाम भवति ।

विद्यातत्फलयो रूत्कर्षः प्रार्थ्यते ।

अथानन्तरमध्ययनलक्षणविधानस्य पूर्ववृत्तस्य यतोऽत्यर्थं ग्रन्थभाविता बुद्धिर्न शक्यते सहसाऽर्थज्ञानविषयेऽवतारयितुमिति—अतः संहिताया उपनिषदं संहिताविषयं दर्शनमिति—एतद्ग्रन्थसंनिकृष्टामेव—व्याख्यास्यामः । पञ्चस्वधिकरणेषु—आश्रयेषु—ज्ञानविषयेष्वित्यर्थः । कानि तानि ? इत्याह—अधिलोकं लोकेष्वधि यद्दर्शनं तदधिलोकम्, तथाऽधिज्योतिषम्, अधिविद्यम्, अधिप्रजम्, अध्यात्मम्—इति । ता एताः पञ्चविषया उपनिषदो लोकादिमहावस्तुविषयत्वात् संहिताविषयत्वाच्च महत्यश्च ताः संहिताश्च ता महासंहिता इत्याचक्षते कथयन्ति वेदविदः ।

संहिताविषयं स्थूलोपासनम्

---

तस्यान्यत्रैव सिद्धत्वात्, इह कर्मव्युत्पत्तिरेव शिक्षाशब्दस्य ग्राह्या । [रूपमिति] "चक्षिङः ख्याञ्" इति सूत्रेण ख्याञादिष्टो यस्तस्येदं रूपं, न "ख्या प्रकथने" इत्यस्य, तस्य सोपसर्गस्य प्रयोगानभिधानादित्यर्थः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दज्ञानविरचिते तैत्तिरीयोपनिषच्छांकरभाष्यटिप्पणे शिक्षावल्ल्यां द्वितीयोऽनुवाकः ॥ २ ॥

संहिता—वर्णानां सन्निकर्षः, तद्विषयमुपासनं प्रथमं कथ्यत इत्याह—अधुनेति । सन्निधानाच्च स्वशाखासंहितैव ग्राह्या । 'शं नो मित्रः' इत्याद्याशीर्वादः कृत्स्नोपनिषच्छेषः, संहितोपनिषच्छेपमाशीर्वादान्तरमाह—तत्रेति ।

---

(१) पा. सू. २-४-५४ (२) धातुपाठः २. ५०. (३) 'खासंनिहितै' इति पाठान्तरम् ।

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

अथाधिलोकम् । पृथिवी पूर्वरूपम् । द्यौरुत्तररूपम् ।
आकाशः संधिः ( १ ) । वायुः संधानम् । इत्यधिलोकम् ।
अथाधिज्यौतिषम् । अग्निः पूर्वरूपम् । आदित्य उत्तररूपम् ।
आपः संधिः । वैद्युतः संधानम् । इत्यधिज्यौतिषम् ।
अथाधिविद्यम् । आचार्यः पूर्वरूपम् ( २ ) । अन्तेवास्युत्तररूपम् ।
विद्या संधिः । प्रवचनं संधानम् । इत्यधिविद्यम् ।
अथाधिप्रजम् । माता पूर्वरूपम् । पितोत्तररूपम् ।
प्रजा संधिः । प्रजननं संधानम् । इत्यधिप्रजम् ( ३ )
अथाध्यात्मम् । अधरा हनुः पूर्वरूपम् । उत्तरा हनुरुत्तररूपम्
वाक्संधिः । जिह्वा संधानम् । इत्यध्यात्मम् ।

अथ तासां यथोपन्यस्तानां मध्येऽधिलोकं दर्शनमुच्यते । दर्शनक्रमविवक्षार्थोऽथशब्दः सर्वत्र । पृथिवी पूर्वरूपं—पूर्वो वर्णः पूर्वरूपं—संहितायाः पूर्वे वर्णे पृथिवीदृष्टिः कर्तव्येत्युक्तं भवति । तथा द्यौरुत्तररूपम्—आकाशोऽन्तरिक्षलोकः संधिर्मध्यं पूर्वोत्तररूपयोः—संधीयेते अस्मिन्पूर्वोत्तररूपे—इति ॥

लोकादिविषया उपास्यावयवाः

वायुः संधानम्—संधीयतेऽनेनेति । इत्यधिलोकं दर्शनमुक्तम् । अथाधिज्यौतिषमित्यादि समानम् ।

---

वस्तूपासनं हित्वा प्रथमतः शब्दोपासनविधाने हेतुरतःशब्देनोक्त इत्याह—यतोऽत्यर्थमिति । पञ्चस्विति सप्तमी तृतीयार्थे परिणेया । अधिकरणशब्दश्च विषयपर्यायः । पञ्चभिः पदार्थैर्विशेषितं ज्ञानं वर्णेषु कर्तव्यम्, यथा विष्णुदर्शनं प्रतिमायामित्यर्थः । लोकेष्वधीति । लोकानधिकृत्य—उपादाय ध्येयत्वेनेत्यर्थः । विद्याशब्देन विद्याप्रतिबद्ध आचार्यादिर्विवक्षितः । तथैव प्रजाशब्देन प्रजाप्रतिबद्धः पित्रादिर्विवक्षितः । अध्यात्ममिति—आत्मानं—भोक्तारमधिकृत्य यद्वर्तते जिह्वादि तद्विवक्षितम् । सर्वत्र तत्तदभिमानिनी देवतैव ग्राह्या, अन्यस्योपास्यत्वासंभवादिति । विधिशेषमर्थवादमाह—ता एता इति । संहितोपनिषदः कर्तव्या इत्युत्पत्तिविधिरुक्तः ।

कथं कर्तव्याः ?—इत्याकाङ्क्षायां विनियोगविधिमाह—अथ तासामित्यादिना ।

---

( १ ) 'पु वक्तव्यम्—इति पाठान्तरम् ( २ ) 'न्यथोपा' इति पाठान्तरम् ।

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

इतीमा म॑हास॒ꣳहिताः ।
य एवमेता महास॒ꣳहिता व्याख्यांता वे॒द । संधीयते प्रजंया
प॒शुभिः । ब्रह्मवर्चसेनान्नाद्येन सुवर्ग्येण लो॒के॒न ( ४ ) ॥
संधिराचार्यः पू॒र्व॒रू॒पमित्य॒धि॒प्रजं लो॒के॒न ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि शिक्षावल्ल्यां तृतीयोऽनुवाकः ॥ ३ ॥

---

इतीमा इत्युक्ता उपप्रदर्श्यन्ते ।

यः कश्चिदेवमेता महासंहिता व्याख्याता वेद—उपास्ते; वेदेत्युपासनं स्यात्, विज्ञानाधिकारात्, "इति प्राचीनयोग्योपास्स्व" इति च वचनात्; उपासनं च यथाशास्त्रं तुल्यप्रत्ययसंततिः, असंकीर्णा चातत्प्रत्ययैः, शास्त्रोक्तालम्बनविषया च; प्रसिद्धश्चोपासनशब्दस्यार्थो लोके—गुरुमुपास्ते, राजानमुपास्त इति; यो हि गुर्वादीन्सन्ततमुपचरति, स उपास्त इत्युच्यते; स च फलमाप्नोत्युपासनस्य; अतोऽत्रापि च य एवं वेद,—स सन्धीयते प्रजादिभिः स्वर्गान्तैः—प्रजादिफलं प्राप्नोतीत्यर्थः ।

ऐहिकामुष्मिकफलसिद्धय उपासनाविधिः

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवतः कृतौ तैत्तिरीयोपनिषच्छिक्षावल्लीभाष्ये तृतीयोऽनुवाकः ॥ ३ ॥

---

कर्तुरेकत्वात्, अनुष्ठेयानां बहुत्वात्, अवश्यंभाविनि क्रमविशेषे नियमार्था अथशब्दाः । "हृदयस्याग्रेऽवद्यत्यथ जिह्वाया अथ वक्षसः" इतिवत् ।

उपप्रदर्श्यन्ते परामृश्यन्ते ।

अधिकारविधिप्रदर्शनाय यथा दर्शादयः षड्यागाः समुच्चिताः फलसाधनम्, अधिकारांशेनाभेदात्, तथा पञ्चोपनिषदः समुच्चिताः प्रजादिफलकामस्यानुष्ठेया इत्याह—यः कश्चिदित्यादिना । फलकामिनाऽनुष्ठीयमानं संहितोपासनं कामितफलाय भवति; फलानभिसंधिना त्वनुष्ठीयमानं ब्रह्मविद्यार्थं भवति ।

मेधाहीनेन ब्रह्मणोऽवगन्तुमशक्यत्वान्मेधाकामस्य जपोऽपि ब्रह्मविद्यार्थो भवति । श्रीविहीनेन सत्त्वशुद्ध्यर्थं यागाद्यनुष्ठातुमशक्यत्वादिति श्रीकामस्य होमोऽपि परम्परया ब्रह्मविद्योपयोगीति महत्तात्पर्यं विद्यासन्निधिसमाम्नातानां सर्वत्र द्रष्टव्यम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दज्ञानविरचितायां तैत्तिरीयोपनिषच्छांकरभाष्यटिप्पणे शिक्षावल्ल्यां तृतीयोऽनुवाकः ॥ ३ ॥

---

(१) १-६.(२)ब्र.सू.४-१-१. भाष्यं द्रष्टव्यम् । (३) तै.स.६-३-१०-५.(४) जै.सू.११-१-१.(५) सन्ति दर्शयागे त्रीणि प्रधानानि हवींषि, पूर्णमासयागे च त्रीणि । आग्नेयोऽष्टाकपालः, ऐन्द्रं दधि, ऐन्द्रं पयः—इति दर्शयागे। आग्नेयोऽष्टाकपालः, आज्येन प्राजापत्य उपांशुयागः, अग्नीषोमीय एकादशकपालः—इति पौर्णमासे।

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

## अथ शिक्षावल्ल्यां चतुर्थोऽनुवाकः।

### ( मेधादिसिद्ध्यर्था मन्त्राः )

यश्छन्दसामृषभो विश्वरूपः । छन्दोभ्योऽध्यमृतात्संबभूव ।
स मेन्द्रो मेधया स्पृणोतु । अमृतस्य देव धारणो भूयासम् ।
शरीरं मे विचर्षणम् । जिह्वा मे मधुमत्तमा । कर्णाभ्यां भूरि
विश्रुवम् । ब्रह्मणः कोशोऽसि मेधया पिहितः । श्रुतं मे गोपाय ।

यश्छन्दसामिति । मेधाकामस्य श्रीकामस्य च तत्प्राप्तिसाधनं जपहोमावुच्येते । "स मेन्द्रो मेधया स्पृणोतु," "ततो मे श्रियमावह" इति च लिङ्गदर्शनात् । यश्छन्दसां वेदानामृषभ इवर्षभः प्राधान्यात् । विश्वरूपः सर्वरूपः सर्ववाग्व्याप्तेः, "तद्यथा शंकुना" इत्यादिश्रुत्यन्तरात् । अत एवर्षभत्वमोङ्कारस्य । ओङ्कारो ह्यत्रोपास्य इति ऋषभादिशब्दैः स्तुतिर्न्याय्यैवोङ्कारस्य । छन्दोभ्यो वेदेभ्यो, वेदा ह्यमृतं, तस्मादमृतात्, अधिसंबभूव,—लोकदेववेदव्याहृतिभ्यः सारिष्ठं जिघृक्षोः प्रजापतेस्तपस्यत ओङ्कारः सारिष्ठत्वेन प्रत्यभादित्यर्थः । न हि नित्यस्योङ्कारस्याञ्जसैवोत्पत्तिरवकल्पते । स एवंभूत ओङ्कार इन्द्रः सर्वकामेशः परमेश्वरो मा मां मेधया प्रज्ञया स्पृणोतु प्रीणयतु बलयतु वा । प्रज्ञाबलं हि प्रार्थ्यते । अमृतस्य—अमृतत्वहेतुभूतस्य ब्रह्मज्ञानस्य तदधिकारात्, हे देव, धारणो धारयिता भूयासं भवेयम् ।

मेधाहेतुर्मन्त्रः

किञ्च शरीरं मे मम विचर्षणं विचक्षणं योग्यमित्येतत् । भूयादिति प्रथमपुरुषविपरिणामः । जिह्वा मे मधुमत्तमा मधुमत्यतिशयेन मधुरभाषिणीत्यर्थः । कर्णाभ्यां श्रोत्राभ्यां भूरि बहु विश्रुवं व्यश्रवं (? विश्रब्धं) श्रोता भूयासमित्यर्थः । आत्मज्ञानयोग्यः कार्यकरणसङ्घातोऽस्त्विति वाक्यार्थः; मेधा

आरोग्यादिहेतुर्मन्त्रः

---

अवान्तरतात्पर्यमभिप्रेत्याऽऽह—यश्छन्दसामित्यादिना । संबभूवेति जन्मवाचके पदे श्रूयमाणे, किमिति "प्रजापतिर्लोकानभ्यतपत्" इत्यादिश्रुत्यन्तरानुसारेण श्रेष्ठत्वेन प्रतिभानं व्याख्यायते? तत्राऽऽह—न हीति । पुरुषविपरिणाम इति । भूयासमित्युत्तमपुरुषस्य प्रकृतस्य प्रथमपुरुषत्वेन विपरिणामः कर्तव्य इत्यर्थः ।

---

(१) छां. उ. २-२३-४ (२) प्रार्थयते । इति पाठान्तरम् (३) व्यश्रवमित्यत्राडभावश्छान्दसः । झटिति श्रो—० । एवमेव सर्वलिखितमुद्रितपुस्तकेषु पाठो लभ्यते !। (४) छां. उ. २-२३-२ (५)—० रेणाऽऽत्मज्ञानयोग्यकार्यश्रेष्ठत्वेन इति पाठान्तरम्

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

आवहन्ती वितन्वाना (१)। कुर्वाणाऽचीरमात्मनः। वासांसि मम गावश्च। अन्नपाने च सर्वदा। ततो मे श्रियमावह। लोमशां पशुभिः सह स्वाहा।
[ आ मायन्तु ब्रह्मचारिणः स्वाहा। विमाऽऽयन्तु ब्रह्मचारिणः स्वाहा। प्र माऽऽयन्तु ब्रह्मचारिणः स्वाहा। दमायन्तु ब्रह्मचारिणः स्वाहा। शमायन्तु ब्रह्मचारिणः स्वाहा (२) ]

च तदर्थमेव हि प्रार्थ्यते। ब्रह्मणः परमात्मनः कोशोऽसि—असेरिव, उपलब्ध्यधिष्ठानत्वात्,—त्वं हि ब्रह्मणः प्रतीकं, त्वयि ब्रह्मोपलभ्यते। मेधया लौकिकप्रज्ञया पिहित आच्छादितः स त्वं सामान्यप्रज्ञैरविदितसतत्त्व इत्यर्थः। श्रुतं श्रवणपूर्वकमात्मज्ञानादिकं मे गोपाय रक्ष—तत्प्राप्त्यविस्मरणादि कुर्वित्यर्थः। जपार्था एते मन्त्रा मेधाकामस्य।

श्रीकामस्य होमार्थास्त्वधुनोच्यन्ते मन्त्राः। आवहन्ती—आनयन्ती; वितन्वाना—विस्तारयन्ती, तनोतेस्तत्कर्मत्वात्; कुर्वाणा निर्वर्तयन्ती, अचीरमचिरं क्षिप्रमेव—चिरं वा कुर्वाणा, आत्मनो मम,—किम्? इत्याह—वासांसि वस्त्राणि, मम गावश्च गाश्चेति यावत्, अन्नपाने च सर्वदा—एवमादीनि कुर्वाणा श्रीर्या तां ततो मेधानिर्वर्तनात्परमावह—आनय, अमेधसो हि श्रीरनर्थायैवेति। किंविशिष्टाम्? लोमशां—अजाऽव्यादियुक्तां, अन्यैश्च पशुभिः सह युक्तामावहेति, अधिकारादोंकार एवाभिसंबध्यते। स्वाहा स्वाहाकारो होमार्थमन्त्रान्तज्ञापनार्थः।

*श्रीकामस्य होमार्था मन्त्राः*

[ आयन्तु मामिति व्यवहितेन संबन्धः। ब्रह्मचारिणो विमाऽऽयन्तु प्रमाऽऽयन्तु दमायन्तु शमायन्त्वित्यादि। ]

*विद्यासम्प्रदायप्रवृत्त्यर्थं शिष्यसम्पादकहोमार्था मन्त्राः*

---

अचेतनशब्दं प्रति प्रार्थना कथं? कथं चेन्द्रशब्देनाभिधानम्? इत्याशङ्क्य ब्रह्माभेदविवक्षयेत्यभिप्रेत्याऽऽह—ब्रह्मण इति। ब्रह्माभेदेन प्रार्थितदाने समर्थश्चेदोङ्कारः, किमिति सर्वैर्नोपास्यते? इत्याशङ्क्याऽऽह—मेधयेति। लौकिकप्रज्ञयेति—शालग्रामादिष्विव देवताबुद्ध्येत्यर्थः। नैतेष्वार्षेयादि मृग्यम्, ब्राह्मणोत्पन्नत्वात्।

---

(१)=विषयाभिनिवेशेन (२) दैर्घ्यं छान्दसम्, छान्दसो दीर्घः–इति वाधिकं पाठान्तरम्। (३) शिष्टां च लोमशां श्रियम्–इति पाठान्तरम्। (४) 'विशब्दो विविधत्वमाचष्टे। पश्वादिकामाः स्वर्गलोककामा ब्रह्मलोककामा मोक्षकामाश्चेत्येवं ब्रह्मचारिणां विविधत्वम्। प्रशब्दः प्रकर्षमाचष्टे। विद्याग्रहणे प्रज्ञातिशयः

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

यशो जनेऽसानि स्वाहा । श्रेयान्वस्यसोऽसानि स्वाहा ।
तं त्वा भग प्रविशानि स्वाहा । स मा भग प्रविश स्वाहा ।
तस्मिन्त्सहस्रशाखे । नि भगाहं त्वयि मृजे स्वाहा ।
यथाऽऽपः प्रवताऽऽयन्ति । यथा मासा अहर्जरम् ।
एवं मां ब्रह्मचारिणः । धातरायन्तु सर्वतः स्वाहा ।
प्रतिवेशोऽसि प्र मा भाहि प्र मा पद्यस्व ( ३ ) ॥

यशो यशस्वी जने जनसमूहेऽसानि भवानि । श्रेयान्प्रशस्यतरो वस्यसो वसीयसो वसुतराद्वसुमत्तराद्वाऽसानीत्यर्थः । किंच तं ब्रह्मणः कोशभूतं त्वा त्वां हे भग भगवन्पूजावन्प्रविशानि, प्रविश्य चानन्यस्त्वदात्मैव भवानीत्यर्थः । स त्वमपि मा मां भग भगवन्पूजावन्प्रविशाऽऽवयोरेकत्वमेवास्तु । तस्मिंस्त्वयि सहस्रशाखे बहुभेदे हे भगवन् , निमृजे शोधयाम्यहं पापकृत्याम् ।

संप्रदायप्रवृत्तिजनितकीर्तिप्रदौ मन्त्रौ

यथा लोक आपः प्रवता प्रवणवता निम्नवता देशेन यन्ति गच्छन्ति, यथा च मासा अहर्जरं–संवत्सरोऽहर्जरः—अहोभिः परिवर्तमानो लोकाञ्जरयतीति, अहानि वाऽस्मिञ्जीर्यन्त्यन्तर्भवन्तीत्यहर्जरः—तं च यथा मासा यन्ति, एवं ब्रह्मचारिणो हे धातः सर्वस्य विधातः, मा मामायन्त्वागच्छन्तु सर्वतः सर्वदिग्भ्यः ।

बहुशिष्यसंपादको मन्त्रः

प्रतिवेशः श्रमापनयनस्थानमासन्नगृहमित्यर्थः, एवं त्वं प्रतिवेश इव प्र-

---

'वसे निवासे', 'वस आच्छादने' इति धातुद्वयादुप्रत्ययः शीलेऽर्थे । वसुर्वसनशीलः । पराच्छादनशीलो वा वसुः । अतिशयेन वसुर्वसीयांस्तस्माद्वसीयसः । ईलोपश्छान्दसः । वसुमान्वसुशब्देन लक्ष्यत इत्यभिप्रेत्याऽऽह—वसुमत्तराद्वेति । पूर्वोक्तस्य प्रार्थनस्य प्रयोजनमाह—किञ्चेति । यदुक्तं 'ब्रह्मचारिणो मामायन्तु' इति—तत्र दृष्टान्तमाह–यथेति ।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दज्ञानविरचिते तैत्तिरीयोपनिषच्छांकरभाष्यटिप्पणे शिक्षावल्ल्यां चतुर्थोऽनुवाकः ॥ ४ ॥

---

प्रकर्षः । दमित्यनेनान्ययेन दान्तिरभिधीयते । बाह्येन्द्रियचेष्टाभ्यो बाललीलाभ्य उपरतिरत्र दान्तिः । शमित्यनेन शान्तिरभिधीयते । क्रोधादिचित्तदोषराहित्यं शान्तिः । विमायान्वित्यादयश्चत्वारो मन्त्राः शाखान्तरगतत्वाभिप्रायेण केषुचिद्देशेषु नाम्नायन्ते '–इति श्रीसायणाचार्यभाष्ये.

(१) धा० पा० १. १०३० (२) धा० पा० २. १३

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

वितन्वाना शर्मायन्तु ब्रह्मचारिणः स्वाहा धातरायंन्तु
सर्वतः स्वाहैकं च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि शिक्षावल्ल्यां चतुर्थोऽनुवाकः ॥ ४ ॥

---

## अथ शिक्षावल्ल्यां पञ्चमोऽनुवाकः ।

( व्याहृत्युपासनम् )

भूर्भुवः सुवरिति वा एतास्तिस्रो व्याहृतयः ।

उपस्थानम् तिवेशस्त्वच्छीलिनां सर्वपापदुःखापनयनस्थानमसि, अतो मा मां प्रति प्रभाहि प्रकाशयाऽऽत्मानं, प्रपद्यस्व च–मां रसविद्धमिव लोहं त्वन्मयं त्वदात्मानं कुर्वित्यर्थः । श्रीकामोऽस्मिन्विद्याप्रकरणेऽभिधीयमानो धनार्थः, धनं च कर्मार्थम्, कर्म चोपात्तदुरितक्षयार्थम्, तत्क्षये हि विद्या प्रकाशते, तथा च स्मृतिः—

"ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः ।
यथाऽऽदर्शतले प्रख्ये पश्यन्त्यात्मानमात्मनि ॥"—इति ।

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवतः
कृतौ तैत्तिरीयोपनिषच्छिक्षावल्लीभाष्ये चतुर्थोऽनुवाकः ॥ ४ ॥

---

संहिताविषयमुपासनमुक्तं, तदनु मेधाकामस्य श्रीकामस्य च मन्त्रा अनुक्रान्ताः, ते च पारम्पर्येण विद्योपयोगार्था एव । अनन्तरं व्याहृत्यात्मनो ब्रह्मणोऽन्तरुपासनं स्वाराज्यफलं प्रस्तूयते—भूर्भुवः सुवरिति; 'इतिः' उक्तोपप्रदर्शनार्थः–एतास्तिस्र इति प्रदर्शितानां परामर्शार्थः, परामृष्टाः स्मार्यन्ते; वै—इत्यनेन तिस्र एताः प्रसिद्धा व्याहृतयः स्मार्यन्ते तावत् ।

(अङ्गदेवताध्यानस्य प्रतीकत्वेन व्याहृतित्रयम्)

---

वृत्तानुवादपूर्वकमुत्तरानुवाकस्य संबन्धमाह—संहिताविषयमित्यादिना । व्याहृतीनां श्रद्धागृहीतत्वात्, तत्परित्यागेनोपदिश्यमानं ब्रह्म न बुद्धिमारोहेदिति ततो व्याहृतिशरीरं हिरण्यगर्भाख्यं ब्रह्मान्तः–हृदये–ध्येयत्वेनोपदिश्यते इत्यर्थः ।

---

( १ ) तुल्यम्—यद्वदयो रसविद्धं काञ्चनतां याति तद्वदेवासौ । स्वात्मनिरूपणे—५८. रसविद्धमयः स्वर्णं यथा भवति सर्वदा । केनचित्साधनेनैव तथा जीवः शिवो भवेत् ॥ इति केचित्स्वमोहेन प्रवदन्ति तु वादिनः ॥ सूत- सं० ४.३९.३० ( २ ) शांति-प. २०४—८

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

तासा॑मु ह स्मै॒तां च॑तु॒र्थी॑म्। माहा॑चमस्यः॒ प्रवे॑दयते। मह॒ इति॑। तद्ब्रह्म॑। स आ॒त्मा। अङ्गा॑न्य॒न्या दे॒वताः॑।

भूरिति॒ वा अ॒यं लो॒कः। भुव॒ इत्य॒न्तरि॑क्षम्। सुव॒रित्य॒सौ लो॒कः (१)। मह॒ इत्या॑दि॒त्यः। आ॒दि॒त्ये॒न वाव सर्वे॑ लो॒का म॒ही॑यन्ते।

भूरिति॒ वा अ॒ग्निः। भुव॒ इति॑ वा॒युः। सुव॒रित्या॑दि॒त्यः। मह॒ इति॑ च॒न्द्रमाः॑। च॒न्द्रम॑सा वाव सर्वा॑णि॒ ज्योती॑ꣳषि म॒ही॑यन्ते। भूरिति॒ वा ऋचः॑। भुव॒ इति॒ सामा॑नि। सुव॒रिति॒ यजू॑ꣳषि (२)।

चतुर्थव्याहृतिः

तासामियं चतुर्थी व्याहृतिर्मह इति; तामेतां चतुर्थीं महाचमसस्यापत्यं माहाचमस्यः प्रवेदयते;—उ ह स्म,—इत्येतेषां वृत्तानुकथनार्थत्वाद्विदितवान् ददर्शेत्यर्थः। 'माहाचमस्य' ग्रहणमार्षानुस्मरणार्थम्। ऋष्यनुस्मरणमप्युपासनाङ्गमिति गम्यत इहोपदेशात्।

व्याहृतिचतुष्टये दृष्टिविशेषविधानम्

येयं माहाचमस्येन दृष्टा व्याहृतिः 'महः' इति, तद्ब्रह्म—महद्धि ब्रह्म, महश्च व्याहृतिः। किं पुनस्तत्? स आत्मा—आप्नोतेर्व्याप्तिकर्मण आत्मा; इतराश्च व्याहृतयः—लोकाः, देवाः, वेदाः, प्राणाश्च—मह इत्यनेन व्याहृत्यात्मनाऽऽदित्यचन्द्रब्रह्मान्नभूतेन व्याप्यन्ते यतः, अतोऽङ्गान्यवयवा अन्या देवताः; देवताग्रहणमुपलक्षणार्थं लोकादीनाम्।

तासु लोकदेवदृष्टिविधानम्

मह इत्येतस्य व्याहृत्यात्मनो देवलोकादयश्च सर्वेऽवयवभूता यतः, अत आहाऽऽदित्यादिभिर्लोकादयो महीयन्त इति;—आत्मना ह्यङ्गानि महीयन्ते, महनं वृद्धिरुपचयः, महीयन्ते वर्धन्त इत्यर्थः।

'महः' इति व्याहृतावङ्गित्रह्मदृष्टिः कर्तव्या। तत्र किं साम्यम्?—इत्यत आह—महद्धीति। यथा देवदत्तस्य पादादीन्यङ्गानि, मध्यभागश्चाङ्गीतरेषामङ्गानामात्मा कथ्यते—व्यापकत्वात्, तथा महोव्याहृतिर्हिरण्यगर्भस्य ब्रह्मणो मध्यभाग आत्मेति कल्प्यते; इतराश्च व्याहृतयः पादाद्यवयवत्वेन कल्प्यन्ते। प्रथमव्याहृतिः पादौ, द्वितीया बाहू, तृतीया शिर इत्यर्थः।

(१) तस्या महत्त्वाद्ब्रह्मत्वम्, सर्वव्यापकत्वाच्चाऽऽत्मत्वम्। (२) आप्नोति—उपादानकारणतया स्वकार्यभूतं सर्वं जगदन्तर्बहिश्च व्याप्नोत्यात्मा। उक्तं हि—"यदादत्ते यच्चाप्नोति विषयानिह। यच्चास्य सन्ततो भावस्तस्मादात्मेति गीयते"॥ लिङ्ग—पु. ७०.९६. (३) महाव्याहृतावङ्गिब्रह्मदृष्टिर्महत्त्वव्यापकत्वसामान्यात्।



CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

मह इति ब्रह्म । ब्रह्मणा वाव सर्वे वेदा महीयन्ते ।
भूरिति वै प्राणः । भुव इत्यपानः । सुवरिति व्यानः ।
मह इत्यन्नम् । अन्नेन वाव सर्वे प्राणा महीयन्ते ।
ता वा एताश्चतस्रश्चतुर्धा । चतस्रश्चतस्रो व्याहृतयः ।
ता यो वेद । स वेद ब्रह्म । सर्वेऽस्मै देवा बलिमावहन्ति ( ३ ) ॥

अयं लोकः, अग्निः, ऋग्वेदः, प्राण,—इति प्रथमा व्याहृतिर्भूरिति । एवमुत्तरोत्तरैकैका चतुर्धा भवति ।

मह इति ब्रह्म—' ब्रह्म ' इत्योङ्कारः—शब्दाधिकारेऽन्यस्यासंभवात् । उक्तार्थमन्यत् ।

वेद-प्राण-दृष्टिविधानम्

ता वा एताश्चतस्रश्चतुर्धेति—'ता वा एता'—भूर्भुवः सुवर्मह इति चतस्र एकैकशश्चतुर्धा चतुष्प्रकाराः; धाशब्दः प्रकारवचनः, चतस्रश्चतस्रः सत्यश्चतुर्धा भवन्तीत्यर्थः । तासां यथाक्लृप्तानां पुनरुपदेशस्तथैवोपासननियमार्थः ।

यथोक्तव्याहृत्युपसंहारः—षोडशकलस्य पुरुषस्योपास्यत्वम्

ता यथोक्तव्याहृतीर्यो वेद, स वेद विजानाति—किं ? ब्रह्म । ननु—' तद्ब्रह्म स आत्मा ' इति ज्ञाते ब्रह्मणि न वक्तव्यमविज्ञातवत्—स वेद ब्रह्म—इति ?

तासां व्याहृतीनामुपासनाविधिः

---

व्याहृत्यवयवं ब्रह्मोपासीतेत्युत्पत्तिविधिरुक्तः; इदानीमङ्गविशेषविधिः कथ्यते—भूरिति वा अयं लोक इत्यादिना ।

तत्रैकैका व्याहृतिश्चतुष्प्रकाराऽवगन्तव्येति तात्पर्यमाह—अयं लोक इत्यादिना ।

एकैका व्याहृतयो यदा चतुष्प्रकाराश्चिन्त्यन्ते, तदा षोडशकलः पुरुष उपासितो भवतीत्यभिप्रेत्य संक्षेपमाह—ता वा एता इति ।

' स वेद ब्रह्म ' इति ब्रह्मवेदनं फलत्वेन न सङ्कीर्त्यतेऽधिकारविधिवाक्ये, किन्तु वक्ष्यमाणानुवाकेनास्मिन्नेव ब्रह्मोपासने गुणविधानं भविष्यतीति सूचयितुमित्याह—न, तद्विशेषवि-

---

( १ ) अन्तरिक्षम्, वायुः, साम, अपानश्च–द्वितीया; असौ लोकः ( परोक्षो लोकः स्वर्गलोकः ), आदित्यः, यजुः, व्यानश्च–तृतीया; आदित्यः, चन्द्रः, ब्रह्म, अन्नं च–चतुर्थी । ( २ ) ओङ्कारेण हि सर्वे वेदाः पूज्यन्ते, वेदोच्चारणस्य प्रणवपूर्वकत्वात् । (३) 'अयं लोकः' इत्यादिना व्याहृतीनां प्रत्येकं चतुर्विधत्वमुक्तमेव, किमिति पुनरुपदेशः? इत्याह 'उपासननियमार्थः' इति—व्याहृतीनां चतुर्विधत्वं स्तुत्यर्थं नोच्यते, किंतु प्रत्येकं तासां चतुर्विधत्वेनोपासनं नियतमिष्यते । तथा षोडशकलस्य पुरुषस्योपास्यत्वमत्र सेत्स्यति । अधिकवचनस्यार्थविशेषसूचकत्वादित्यर्थः ।

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

असौ लोको यजूꣳषि वेद द्वे च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि शिक्षावल्ल्यां पञ्चमोऽनुवाकः ॥ ५ ॥

---

न, तद्विशेषविवक्षुत्वाददोषः । सत्यं, विज्ञातं चतुर्थव्याहृत्यात्मा ब्रह्मेति, न तु तद्विशेषः--हृदयान्तरुपलभ्यत्वम्, मनोमयत्वादिश्च 'शान्तिसमृद्धम्' इत्येवमन्तो विशेषणविशेष्यरूपो धर्मपूगः--विज्ञायते, इति तद्विवक्षु हि शास्त्रमविज्ञातमिव ब्रह्म मत्वा 'स वेद ब्रह्म' इत्याह; अतो न दोषः । यो हि वक्ष्यमाणेन धर्मपूगेन विशिष्टं ब्रह्म वेद, 'स वेद ब्रह्म' इत्यभिप्रायः । अतो वक्ष्यमाणानुवाकेनैकवाक्यताऽस्य, उभययोर्ह्यनुवाकयोरेकमुपासनम्, लिङ्गाच्च--'भूरित्यग्नौ प्रतितिष्ठति' इत्यादिकं लिङ्गमुपासनैकत्वे;--विधायकाभावाच्च--नहि 'वेद'—'उपासीत'—इति विधायकः कश्चिच्छब्दोऽस्ति व्याहृत्यनुवाके । 'ता यो वेद' इति च वक्ष्यमाणार्थत्वान्नोपासनभेदकः । वक्ष्यमाणार्थत्वं च तद्विशेषविवक्षुत्वादित्यादिनोक्तम् ।

सर्वे देवा अस्मा एवं विदुषेऽङ्गभूता आवहन्त्यानयन्ति बलिं स्वाराज्यप्राप्तौ सत्यामित्यर्थः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवतः कृतौ तैत्तिरीयोपनिषच्छिक्षावल्लीभाष्ये पञ्चमोऽनुवाकः ॥ ५ ॥

---

वक्षुत्वादित्यादिना । यदि व्याहृत्यवयवमेव ब्रह्मोत्तरत्रोपास्यते, तदैवोपासकस्य प्रथमव्याहृत्यात्मकेऽग्नौ प्रतिष्ठाभिधानं घटेत । तस्माद्व्याहृत्यात्मकदेवताप्राप्त्यभिधानमुपासनैकत्वे लिङ्गमित्याह--लिङ्गाच्चेति । किञ्चैकत्र प्रधानविद्याविधिः, अपरत्र गुणविधिः—इत्येवमनुवाकभेदे *चरितार्थे, नानन्यथासिद्धं भेदकं प्रमाणमुपलभ्यत इत्याह—विधायकाभावाच्चेति । विधायक इति भिन्नविद्याबोधक इत्यर्थः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दज्ञानविरचिते तैत्तिरीयोपनिषच्छांकरभाष्यटिप्पणे शिक्षावल्ल्यां पञ्चमोऽनुवाकः ॥ ५ ॥

---

( १ ) ननु यथोक्तव्याहृतिरूपप्रतीकोपासकस्य ब्रह्मलोकप्राप्तिर्नास्ति, "अप्रतीकालम्बनान्नयतीति बादरायणः" ( ब्र. सू. ४.३.१५. ) इति सूत्रे प्रतीकरहितब्रह्मोपासकानामेव तत्प्राप्तिनिर्णयात् । ततो ब्रह्मप्राप्त्यभावेन सर्वदेवपूज्यत्वं न युक्तम् । नायं दोषः—यस्माद्यः पुमान् व्याहृतीर्वेद स पुमान्वक्ष्यमाणानुवाकोक्तं ब्रह्मोपास्ते । ब्रह्मोपासनमेवात्र प्रधानम्; व्याहृत्युपासनमङ्गम्; तस्माद्ब्रह्मप्राप्तौ सत्यां सर्वदेवपूज्यत्वं युक्तम् ।

*अनुवाकभेदप्रमाणं तु नोपासनाभेदात्सिद्ध्यतीति वाच्यम् । तस्य गुणपरत्वेनान्यथासिद्धत्वात् । तस्मादनन्यथासिद्धमुपासनाभेदेनैव सिद्धं प्रमाणं नोपलभ्यते—इति काशीमुद्रितपुस्तके टिप्पणी ।

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

# अथ शिक्षावल्ल्यां षष्ठोऽनुवाकः ।

( मनोमयत्वादिगुणकब्रह्मोपासनम् )
( किञ्चित्सूक्ष्मदर्शिमध्यमाधिकारी )

स य एषोऽन्तर्हृदय आकाशः। तस्मिन्नयं पुरुषो मनोमयः ।
अमृतो हिरण्मयः ।
अन्तरेण तालुके । य एष स्तन इवावलम्बते । सेन्द्रयोनिः ।
यत्रासौ केशान्तो विवर्तते। व्यपोह्य शीर्षकपाले ।

'भूर्भुवःसुवः' स्वरूपा 'मह' इत्येतस्य व्याहृत्यात्मनो ब्रह्मणोऽङ्गान्यन्या देवता इत्युक्तम्। यस्य ता अङ्गभूताः, तस्यैतस्य ब्रह्मणः साक्षादुपलब्ध्यर्थमुपासनार्थं च हृदयाकाशः स्थानमुच्यते, शालग्राम इव विष्णोः। तस्मिन् हि तद्ब्रह्मोपास्यमानं मनोमयत्वादिधर्मविशिष्टं साक्षादुपलभ्यते, पाणाविवाऽऽमलकम् । मार्गश्च सर्वात्मभावप्रतिपत्तये वक्तव्य इत्यनुवाक आरभ्यते—

उपास्यब्रह्मस्वरूपम्

'स' इति व्युत्क्रम्य 'अयं पुरुषः' इत्यनेन संबध्यते । य एषोऽन्तर्हृदये हृदयस्यान्तः,—हृदयमिति पुण्डरीकाकारो मांसपिण्डः, प्राणायतनः, अनेकनाडीसुषिरः, ऊर्ध्वनालः, अधोमुखः, विशस्यमाने पशौ प्रसिद्ध उपलभ्यते,—तस्यान्तर्य एष आकाशः प्रसिद्ध एव करकाकाशवत्,—तस्मिन् सोऽयं पुरुषः; पुरि शयनात्, पूर्णा वा भूरादयो लोका येनेति—पुरुषः; मनोमयः—मनो विज्ञानं, मनुतेर्ज्ञानकर्मणः—तन्मयस्तत्प्रायस्तदुपलभ्यत्वात्, मनुतेऽनेनेति वा मनोऽन्तःकरणम्, तदभिमानी तन्मयः, तल्लिङ्गो वा। अमृतोऽमरणधर्मा, हिरण्मयो ज्योतिर्मयः।

उपासकस्य स्वरूपप्रतिपत्तिद्वारम्

तस्यैवंलक्षणस्य हृदयाकाशे साक्षात्कृतस्य विदुष आत्मभूतस्येन्द्रस्येदृशस्वरूपस्य ब्रह्मणः स्वरूपप्रतिपत्तये मार्गोऽभिधीयते। हृदयादूर्ध्वं प्रवृत्ता सुषुम्ना नाम नाडी योगशास्त्रेषु च प्रसिद्धा; सा चान्तरेण मध्ये प्रसिद्धे तालुके तालुकयोर्गता; यश्चैष तालुकयोर्मध्ये स्तन इवावलम्बते मांसखण्डः, तस्य चान्तरेणेत्येतत्; यत्र च केशान्तः—केशाना मन्तोऽवसानं मूलं केशान्तः—विवर्तते विभागेन वर्तते मूर्धप्रदेश इत्यर्थः; तं

---

तदुपलभ्यत्वादिति। ज्ञानाकारपरिणामिनि मनस्येवोपलभ्यमानत्वाद्ध्यायिभिरित्यर्थः जडस्य मनसः प्रवृत्तिं दृष्ट्वा तदधिष्ठातृतया हिरण्यगर्भोऽनुमीयते, तस्य शास्त्रे सकलकरणाधिष्ठातृत्वेन प्रसिद्धत्वादिति तल्लिङ्गत्वमुक्तमित्यर्थः ।

---

( १ ) तेन लिङ्गेन मनसा गम्यमानः । ( २ ) ०भ्यत्वाद्ध्यातृभिरि०—इति पाठान्तरम् ।

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

भूरित्यग्नौ प्रतितिष्ठति । भुव इति वायौ ( १ ).
सुवरित्यादित्ये । मह इति ब्रह्मणि । आप्नोति स्वाराज्यम् ।
आप्नोति मनसस्पतिम् । वाक्पतिश्चक्षुष्पतिः । श्रोत्रपतिर्विज्ञानं-
पतिः । एतत्ततो भवति । आकाशशरीरं ब्रह्म । सत्यात्म
प्राणारामं मनआनन्दम् । शान्तिसमृद्धममृतम् ।

देशं प्राप्य तत्र विनिःसृता व्यपोह्य विभज्य विदार्य शीर्षकपाले शिरःकपाले विनिर्गता या, सेन्द्रयोनिः—इन्द्रस्य ब्रह्मणो योनिर्मार्गः स्वरूपप्रतिपत्तिद्वारमित्यर्थः।

तथैवं विद्वान्मनोमयात्मदर्शी मूर्ध्नो विनिष्क्रम्य, अस्य लोकस्याधिष्ठाता फलं ब्रह्मप्राप्तिः भूरितिव्याहृतिरूपो योऽग्निर्महतो ब्रह्मणोऽङ्गभूतः, तस्मिन्नग्नौ प्रतितिष्ठति—अग्न्यात्मनेमं लोकं व्याप्नोतीत्यर्थः; तथा भुव इति द्वितीयव्याहृत्यात्मनि वायौ—' प्रतितिष्ठति ' इत्यनुवर्तते ।

सुवरिति तृतीयव्याहृत्यात्मन्यादित्ये, मह इत्यङ्गिनि चतुर्थव्याहृत्यात्मनि ब्रह्मणि 'प्रतितिष्ठति'। तेष्वात्मभावेन स्थित्वाऽऽप्नोति ब्रह्मभूतः स्वाराज्यं स्वराड्भावं स्वयमेव राजाऽधिपतिर्भवति, अङ्गभूतानां देवानां यथा ब्रह्मा; देवाश्च सर्वेऽस्मै बलिमावहन्त्यङ्गभूताः, यथा ब्रह्मणे । आप्नोति मनसस्पतिम्—सर्वेषां हि मनसां पतिः, सर्वात्मकत्वाद्ब्रह्मणः;—सर्वैर्हि मनोभिस्तन्मनुते;—तदाप्नोत्येवं विद्वान् । किञ्च वाक्पतिः—सर्वासां वाचां पतिर्भवति। तथैव चक्षुष्पतिश्चक्षुषां पतिः, श्रोत्रपतिः श्रोत्राणां पतिः, विज्ञानपतिर्विज्ञानानां च पतिः;—सर्वात्मकत्वात्सर्वप्राणिनां करणैस्तद्वान्भवतीत्यर्थः । किञ्च ततोऽप्यधिकतरमेतद्भवति । किं तत् ? उच्यते—आकाशशरीरमाकाशः शरीरमस्य, आकाशवद्वा सूक्ष्मं शरीरमस्य,—इत्याकाशशरीरम्। किं तत्? प्रकृतं ब्रह्म; सत्यात्म—सत्यं मूर्तामूर्तमवितथं स्वरूपं चाऽऽत्मा स्वभावोऽस्य, तदिदं सत्यात्म; प्राणारामम्—प्राणेष्वाराम आरमणमाक्रीडा यस्य तत्प्राणारामम्, प्राणानां वाऽऽरामो यस्मिंस्तत्प्राणारा-

---

स्वाराज्यं निरङ्कुशमैश्वर्यं जगत्स्रष्टृत्वादिलक्षणं न भवतीत्याह—अङ्गभूतानां देवानामिति । सावधिकमैश्वर्यमेवाऽऽह—आप्नोतीत्यादिना ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दज्ञानविरचिते तैत्तिरीयोपनिषच्छांकरभाष्यटिप्पणे शिक्षावल्ल्यां षष्ठोऽनुवाकः ॥ ६ ॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

—इति प्राचीनयोग्योपास्व ( २ ) ॥

वायावमृतमेकं च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि शिक्षावल्ल्यां षष्ठोऽनुवाकः ॥ ६ ॥

---

## अथ शिक्षावल्ल्यां सप्तमोऽनुवाकः ।

( पृथिव्याद्युपाधिकब्रह्मोपासनम् )

( मन्दाधिकारी )

पृथिव्यन्तरिक्षं द्यौर्दिशोऽवान्तरादिशाः । अग्नि-
र्वायुरादित्यश्चन्द्रमा नक्षत्राणि । आप ओषधयो
वनस्पतय आकाश आत्मा । इत्यधिभूतम् ।

मम्, मनआनन्दम्—आनन्दभूतं सुखकृदेव यस्य मनः, तन्मनआनन्दम्; शान्तिसमृद्धं—शान्तिरुपशमः, शान्तिश्च तत्समृद्धं च शान्तिसमृद्धम्, शान्त्या वा समृद्धं तदुपलभ्यत इति शान्तिसमृद्धम्; अमृतममरणधर्मि;—एतच्चाधिकतरं विशेषणं तत्रैव—मनोमयः—इत्यादौ द्रष्टव्यमिति।

एवं मनोमयत्वादिधर्मैर्विशिष्टं यथोक्तं ब्रह्म हे प्राचीनयोग्य, उपास्स्व । उपासनाविधिः 'उपास्स्व'—इत्याचार्यवचनोक्तिरादरार्था। उक्तस्तूपासनशब्दस्यार्थः॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवतः कृतौ तैत्तिरीयोपनिषच्छिक्षावल्लीभाष्ये षष्ठोऽनुवाकः ॥ ६ ॥

---

यदेतद्व्याहृत्यात्मकं ब्रह्मोपास्यमुक्तं, तस्यैवेदानीं पृथिव्यादिपाङ्क्तस्वरूपेणोपासनमुच्यते। पञ्चसङ्ख्यायोगात्पाङ्क्तिच्छन्दःसंपत्तिः; ततः पाङ्क्तत्वं सर्वस्य । पाङ्क्तश्च यज्ञः,—"पञ्चपदा पंङ्क्तिः पाङ्क्तो यज्ञः" इति श्रुतेः । तेन यत्सर्वं लोकाद्यात्मान्तं च पाङ्क्तं परिकल्पयति, यज्ञमेव तत्परिकल्पयति । तेन यज्ञेन परिकल्पितेन पाङ्क्तात्मकं प्रजापतिमभिसंपद्यते । तत्कथं पाङ्क्तमिदं सर्वमित्यत आह—

(हिरण्यगर्भोपासनम्)

'पृथिव्यन्तरिक्षं द्यौर्दिशोऽवान्तरदिशाः—इति लोकपाङ्क्तम्; अग्निर्वायुरादित्यश्चन्द्रमा नक्षत्राणि—इति देवतापाङ्क्तम्; आप ओषधयो वनस्पतय आकाश आत्मा—इति भूतपाङ्क्तम्; आत्मेति विरा-

(आधिभौतिकगुणपञ्चकत्रयम्)

---

उत्तरोऽप्यनुवाकः प्रकारान्तरेण हिरण्यगर्भोपासनविषय इत्याह—यदेतदित्यादिना। पृथि-

---

( १ ) पृ. १२. ( २ ) ऐ. आ. १. ३. ८. ( ३ ) बृ. उ. १. ४. १७; ऐ. ब्रा. ३. २३; ५. १९.

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

अथाध्यात्मम् । प्राणो व्यानोऽपान उदानः समानः । चक्षुः
श्रोत्रं मनो वाक्त्वक् । चर्म माꣳसꣳ स्नावास्थि मज्जा ।
एतदधिविधाय ऋषिरवोचत् । पाङ्क्तं वा इदꣳ सर्वम् ।
पाङ्क्तेनैव पाङ्क्तꣳस्पृणोतीति ( १ ) ॥

सर्वमेकं च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि शिक्षावल्ल्यां सप्तमोऽनुवाकः ॥ ७ ॥

---

द्र—भूताधिकारात् । 'इत्यधिभूतम्'—इत्यधिलोकाधिदैवतपाङ्क्तद्वयोपलक्षणार्थम् । लोकदेवतापाङ्क्तयोश्चाभिहितत्वात् ।

अथ—अनन्तरमध्यात्मं पाङ्क्तत्रयमुच्यते—प्राणादि वायुपाङ्क्तम्; चक्षुरादीन्द्रियपाङ्क्तम्; चर्मादि धातुपाङ्क्तम् । एतावद्धीदं सर्वमध्यात्मं बाह्यं च पाङ्क्तमेवेति । *(अध्यात्मपञ्चकत्रयम्)*

एतदेवमधिविधाय परिकल्प्यर्षिर्वेदः, एतद्दर्शनसंपन्नो वा कश्चिदृषिरवोचदुक्तवान् । किम्?—इत्याह—पाङ्क्तं वा इदं सर्वम्; पाङ्क्तेनैवाऽऽध्यात्मिकेन सङ्ख्यासामान्यात्पाङ्क्तं बाह्यं स्पृणोति बलयति पूरयति—एकात्मतयोपलभत इत्येतत्; एवं पाङ्क्तमिदं सर्वमिति यो वेद, स प्रजापत्यात्मैव भवतीत्यर्थः ॥ *(पाङ्क्तपदकस्योपासना)*

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवतः कृतौ तैत्तिरीयोपनिषच्छिक्षावल्लीभाष्ये सप्तमोऽनुवाकः ॥ ७ ॥

---

व्यादेः कथं पाङ्क्तत्वमित्याकाङ्क्षायां पङ्क्त्याख्यस्यच्छन्दसः संपादनादित्याह—पञ्चसङ्ख्येति । न केवलं पञ्चसङ्ख्यागुणयोगात् पङ्क्तिच्छन्दःसंपादनं, यज्ञत्वसंपादनमपि कर्तुं शक्यत इत्याह—पाङ्क्तश्च यज्ञ इति । पत्नीयजमानपुत्रदैवमानुपवित्तैः पञ्चभिः संपाद्यत इति यज्ञः पाङ्क्त इत्यर्थः। "उत्कृष्टदृष्टिर्निकृष्टे फलवती" इति न्यायाद्बाह्यपाङ्क्तरूपेणाऽऽध्यात्मिकं पाङ्क्तत्रयमवगन्तव्यमित्यभिप्रेत्याऽऽह—एकात्मतयेति ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दज्ञानविरचिते तैत्तिरीयोपनिषच्छांकरभाष्यटिप्पणे शिक्षावल्ल्यां सप्तमोऽनुवाकः ॥ ७ ॥

---

( १ ) यस्मिन्देहेन्द्रियादिसंघाते शास्त्रसंस्काररहितस्य जनस्याहमिति बुद्धिः, सोऽयं लोकप्रसिद्ध आत्मा, तमधिकृत्य यदुपासनं वर्तते तदध्यात्मम् । ( २ )= दृष्ट्वा—इति वार्तिके; अधिकं साक्षात्कारपर्यन्तं यथा भवति तथोपास्य स्वानुभवेन सर्वात्मकं विराड्रूपं प्राप्य—इति सा०भाष्ये। (३)तुलय—तै.ब्रा.१.१०.(४)—पञ्चसंख्याव-

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

## अथ शिक्षावल्ल्यामष्टमोऽनुवाकः ।

### ( प्रणवोपासना—शुद्धब्रह्मोपासना )

### ( उत्तमाधिकारी )

**ओमिति ब्रह्म । ओमितीद्ँ सर्वम् ।**

व्याहृत्यात्मनो ब्रह्मण उपासनमुक्तम्; अनन्तरं च पाङ्क्तस्वरूपेण तस्यैवोपासनमुक्तम् ; इदानीं सर्वोपासनाङ्गभूतस्योङ्कारस्योपासनं विधित्स्यते । परापरब्रह्मदृष्ट्या ह्युपास्यमान ओङ्कारः शब्दमात्रोऽपि परापरब्रह्मप्राप्तिसाधनं भवति,—स ह्यालम्बनं ब्रह्मणः परस्यापरस्य च, प्रतिमेव विष्णोः,—"एतेनैवाऽऽयतनेनैकेतरमन्वेति" इति श्रुतेः ।

ओमिति—'इति' शब्दः स्वरूपपरिच्छेदार्थः । ओमित्येतच्छब्दरूपं ब्रह्मेति मनसा धारयेत्—उपासीत, यत ओमितीदं सर्वम्,—सर्वं हि शब्दरूपमोङ्कारेण व्याप्तम्, "तद्यथा शङ्कुना" इति श्रुत्यन्तरात् ; अभिधानतन्त्रं ह्यभिधेयम्—इत्यत इदं सर्वमोङ्कार इत्युच्यते ।

ॐ ङ्कारवाच्य-ब्रह्मोपासना

---

वृत्तानुवादपूर्वकमुत्तरानुवाकमवतारयति—व्याहृत्यात्मन इत्यादिना । वेदविदां हि सर्वाः

---

-त्वात्। (५)उत्कृष्टेऽपकृष्टबुद्धिरनर्थाय । अपकृष्टे पुनरुत्कर्षबुद्धिः श्रेयसे च । द्विविधान्युपासनानि—अहंग्रहयुक्तानि, प्रतीकविषयाणि चेति । येषु परमात्मा सगुणः सन्नुपास्यते तान्यहंग्रहयुक्तानि । तद्यथा—"स य एषोऽन्तर्हृदय आकाशः । तस्मिन्नयं पुरुषो मनोमयः । अमृतो हिरण्मयः"(६अनुवाके )—इत्यत्र हृदयाकाशमध्यवर्ती परमात्माख्यः पुरुषो मनोमयत्वादिगुणयुक्त उपासितव्यः परमात्माहमिति । स चाहंग्रहः—"आत्मेति तूपगच्छन्ति ग्राहयन्ति च"(ब्र.सू.४.१.३.)—इति सूत्रेऽभिहितः। परमात्मव्यतिरिक्तानि लौकिकानि वस्तून्युत्कृष्टदेवतादृष्ट्या ब्रह्मदृष्ट्या वा संस्कृत्य यत्रोपास्यन्ते तानि प्रतीकविषयाणि । तद्यथा—"पृथिवी पूर्वरूपम्" ( ३ अनुवाके )—इत्यत्र भूदेवतादृष्ट्या संस्कृतं पूर्ववर्णस्वरूपमुपास्यम् । "मनो ब्रह्मेत्युपासीत" ( छां० उ० ३.१८.१. ) इत्यादौ ब्रह्मदृष्ट्या संस्कृतं मनःप्रभृतिकमुपास्यम्।तच्च प्रतीकमुपासकेन न स्वात्मतया ग्रहीतव्यम् ; यतः प्रतीकस्य ब्रह्मकार्यत्वेनोत्कृष्टदृष्टिप्रत्ययालम्बनत्वात्प्रतीकमित्युच्यते । यदि ब्रह्मकार्यस्य ब्रह्मैक्यमवलोक्येत तदा प्रतीकस्वरूपमेव विलीयेत । घटस्य मृद्रूपेणैक्ये विलयदर्शनात् । यदि जीवस्य ब्रह्मैक्यमवलोक्येत, तदा जीवत्वस्यापाये सति, उपासकत्वं हीयेत । अथोपास्योपासकस्वरूपलोभेन कार्यकारणैक्यं जीवब्रह्मैक्यं च न पर्यालोच्येत,तदा गोमहिषवदत्यन्तभिन्नयोः प्रतीकोपासकयोर्नास्त्येकत्वयोग्यता । तस्मान्न प्रतीकस्याहंदृष्टिः।"पृथिवी पूर्वरूपम्"—इत्यत्र प्रथमनिर्दिष्टत्वेनोद्देश्यतया यद्यपि पृथिव्याः प्रतीकत्वं प्राप्तम्, तथा चरमनिर्दिष्टत्वेन विधेयतया पूर्ववर्णस्य दृष्टिपरत्वं प्राप्तम्,तथापि पृथिव्या उत्कृष्टत्वात्तद्दृष्टिरेव पूर्ववर्णे कर्तव्या;—यथोत्कृष्टविष्णुशिवादिर्निकृष्टे शालग्रामादौ क्रियते, न तु विपर्ययः, तद्वत् । उत्कर्षन्यायः "ब्रह्मदृष्टिरुत्कर्षात्"(ब्र.सू.४.१.५.)—इत्यत्र चिन्तितः । शास्त्रे तत्र तत्र यान्युपासनान्युक्तानि, तैः समुच्चितानि यानि कर्माणि तेषां केवलस्य चास्मिन् हितोपदेशपरे ग्रन्थे सर्वत्र चान्यत्रोपास्तिप्रकरणे मृत्युत्वं फलमुक्तम्, गौणी हि सा मुक्तिः—अशनायादिसंबन्धात्; सर्वस्मात्फलवदुपायराशेर्वैराग्यस्येष्टत्वात्; आत्यन्तिकी तु मुक्तिः सम्यग्ज्ञानादेव ।

( १ ) "तस्य वाचकः प्रणवः—यो. सू.१.२७. कठवल्लीषु (५.२५.) "सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति । यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं सङ्ग्रहेण ब्रवीमि"—इति प्रतिज्ञाय तदनन्तरं

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

ओमित्येतदनुकृति ह स्म वा अप्यो श्रावयेत्याश्रावयन्ति ।
ओमिति सामानि गायन्ति । ओंशोमिति शस्त्राणि शंसन्ति ।

ओङ्कारस्तुत्यर्थमुत्तरो ग्रन्थः, उपास्यत्वात्तस्य । ओमित्येतदनुकृति—अनुकृतिः—अनुकरणम्; करोमि, यास्यामि चेति कृतमुक्तम्, ओमित्यनुकरोत्यन्यः, अत ओङ्कारोऽनुकृतिः । ह, स्म, वै—इति प्रसिद्धार्थद्योतकाः, प्रसिद्धं ह्योङ्कारस्यानुकृतित्वम् । अपि च 'ओ श्रावय' इति प्रैषपूर्वकमाश्रावयन्ति प्रतिश्रा-

क्रिया ओङ्कारमुच्चार्य प्रवर्तन्ते, ततस्तस्य श्रद्धागृहीतत्वात्तत्परिहारेणोपदिष्टं ब्रह्म न बुद्धिमारोहेत्, अतस्तमादायैवोपासनं विधीयत इत्यर्थः । नन्वोङ्कारस्य शब्दमात्रस्याचेतनत्वात्, अहमनेनोपासित इति ज्ञानाभावात् कथं फलदातृत्वं स्यात् ?—इत्याशङ्क्याऽऽह—परापरेति । प्रतिमाद्यर्चन इव सर्वत्रेश्वर एव फलदातेति भावः । ओङ्कारे ब्रह्मत्वाध्यासे किं सादृश्यम् ?—इत्यत आह—ओमितीदमिति । सर्वास्पदत्वमोङ्कारस्य ब्रह्मणा सादृश्यमित्यर्थः ।

शस्त्राणि गीतिरहिता ऋच उच्यन्ते । प्रतिगरमिति । ओऽथामोदैवेतिशब्दमध्वर्युः प्रति-

---

"ओमित्येतत्, एतद्ध्येवाक्षरं ब्रह्म—"इत्यादिना सर्ववेदप्रतिपाद्यत्वेनोपक्रान्तस्य परब्रह्मणः प्रतिपादकतया ओमितिपदमुपक्षिप्य तत्प्रशंसादर्शनात् । अपि चास्य मात्रात्रयमृग्यजुस्सामरूपत्वेनाथर्वणोपनिषदादिषु प्रसिद्धम् । प्रपञ्चसारादिषु च "अग्निमीळे पुरोहितम्"—इत्याद्यवेदाद्यवर्णस्य, "योनिरसमुद्रो बन्धुः"—इति मध्यवेदमध्यवर्णस्य, "समानं वरम्"—इत्यन्तिमवेदान्तिमवर्णस्य च समाहृतिः 'ॐ' इतिपदम्—शिवार्कमणिदीपिका—१.१.१. (२) प्र. उ. ५.२. (३) "ओमिति ब्रह्म"—इति वाक्ये ओङ्कारे प्रतीके ब्रह्मदृष्टिर्न विधीयते, किंतूपास्यं ब्रह्मोमित्यनेन विशेषणेन विशेष्यते । उद्गीथन्यायेन (ब्र. सू.३.३.९.) अत्रापि ब्रह्मशब्देन मनोमयत्वादिगुणकं पृथिव्यादिगुणकं शुद्धं चेति त्रिविधब्रह्मप्राप्तौ सत्यां सगुणत्वं व्यावर्त्य शुद्धब्रह्मसमर्पणार्थमोमिति विशेषणम् । ओमित्यनेनैव वाचकेन शब्देन वाच्यं यत्परं ब्रह्म तदेवात्रोपास्यं वस्तु । नह्यत्र मनआद्युपाधि पृथिव्याद्युपाधि वा चिन्तनीयम् । ननु ब्रह्मतत्त्वस्य प्रमाणजन्यं वेदनमेव संभवति, न तूपासनम् । नायं दोषः—द्विविधं हि वेदान्तवाक्यम्—अवान्तरवाक्यं महावाक्यं चेति । जगत्कारणब्रह्मणो यत्तात्त्विकं रूपं तस्य बोधकमवान्तरवाक्यम् । जीवब्रह्मणोस्तादात्म्यबोधकं महावाक्यम् । तत्र महावाक्येन तादात्म्यं विदितवत उपासकत्वाभावो भवतु नाम । यस्त्ववान्तरवाक्यमात्रेण जगत्कारणस्य तत्त्वमात्रं बुध्यते, तस्य तावता कर्तृत्वानपायादुपासकत्वं संभवति । तदेवं शुद्धब्रह्मतत्त्वस्याप्युपास्तिसंभवात् "ब्रह्मोपाप्नवानि"—इत्येवं कामयमानः प्रणवमुच्चारयंस्तदर्थरूपं ब्रह्मतत्त्वमुपासीत, तदेतद्ब्रह्मतत्त्वस्य ध्यानं ब्र०सू०१.३.१३. इत्यत्र चिन्तितम् । तेन चोपासनेन ब्रह्म प्राप्नोत्येव । (४) छां. उ. २. २. ३.

( १ ) "ब्रह्मन्प्रवरायाश्रावयिष्यामीति ब्रह्माणमामन्त्र्य, आश्रावय—ओश्रावय—श्रावय—ओमाश्रावयेति वाऽऽश्रावयति"—इति आप० श्रौ० सू० २. १५. ३. । अत एव तै. सं. १. ६. ११. भाष्ये—"आश्रावय'—इत्ययमेव पाठोऽत्रत्यः ( तैत्तिरीयशाखीयः ); ओश्रावय—श्रावय—ओमाश्रावय—इति च त्रयं शाखान्तरीयम्"—इति । ( २ ) अप्रगीतमन्त्रसाध्या स्तुतिः शस्त्रम्; प्रगीतमन्त्रसाध्या स्तुतिः स्तोत्रम्—तै. सं० भाष्ये ३. २.७. (३) शत. ब्रा. ४. ३. २. १३.; आश्व० श्रौ० सू० ५. ९. ४. तुल्य—आप० श्रौ. सू. १२.२७.१४—१७; १३.९.१०. शां. श्रौ. सू. १०.६. १७. का. श्रौ. सू. १०.३.८; १०.६.५—६.; तै. सं. भाष्ये. ३. २. ९.

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

ओमित्यध्वर्युः प्रतिगरं प्रतिगृणाति । ओमिति ब्रह्मा प्रसौति । ओमित्यग्निहोत्रमनुजानाति । ओमिति ब्राह्मणः प्रवक्ष्यन्नाह,—ब्रह्मोपाप्नवानीति । ब्रह्मैवोपाप्नोति (१) ॥

ओं दश ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि शिक्षावल्ल्यामष्टमोऽनुवाकः ॥ ८ ॥

---

## अथ शिक्षावल्ल्यां नवमोऽनुवाकः ।

### ( उपासकधर्माः )

ऋतं च स्वाध्यायप्रवचने च । सत्यं च स्वाध्यायप्रवचने च । तपश्च स्वाध्यायप्रवचने च । दमश्च स्वाध्यायप्रवचने च । शमश्च

चयन्ति । तथा 'ओमिति सामानि गायन्ति' सामगाः । 'ओंशोमिति शस्त्राणि शंसन्ति' शस्त्रशंसितारोऽपि । तथा 'ओमित्यध्वर्युः प्रतिगरं प्रतिगृणाति' । 'ओमिति ब्रह्मा प्रसौति'—अनुजानाति । 'ओमित्यग्निहोत्रमनुजानाति'—जुहोमीत्युक्त ओमित्येवानुज्ञां प्रयच्छति । ओमित्येव ब्राह्मणः प्रवक्ष्यन् प्रवचनं करिष्यन्नध्येष्यमाण ओमित्येवाऽऽह ; ओमिति प्रतिपद्यतेऽध्येतुमित्यर्थः । ब्रह्म वेदमुपाप्नवानीति प्राप्नुयां ग्रहीष्यामीति; उपाप्नोत्येव ब्रह्म ।

अथवा ब्रह्म परमात्मानमुपाप्नवानीत्यात्मानं प्रवक्ष्यन्प्रापयिष्यन्नोमित्येवाऽऽह; स च तेनोङ्कारेण ब्रह्म प्राप्नोत्येव । ओङ्कारपूर्वं प्रवृत्तानां क्रियाणां फलवत्त्वं यस्मात्, तस्मादोङ्कारं ब्रह्मेत्युपासीतेति वाक्यार्थः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवतः कृतौ तैत्तिरीयोपनिषच्छिक्षावल्लीभाष्येऽष्टमोऽनुवाकः ॥ ८ ॥

---

विज्ञानादेवाऽऽप्नोति स्वाराज्यमित्युक्तत्वात्, श्रौतस्मार्तानां कर्मणामानर्थक्यं प्राप्तम्,—इत्यतस्तन्मा प्रापत्, इति कर्मणां पुरुषार्थं प्रति साधनत्वप्रदर्शनार्थमि—

---

गृणाति होतुः शंसनं प्रति—प्रतिशंसनमुच्चारयतीत्यर्थः । प्रवक्ष्यन्निति—"वचं परिभाषणे" इत्यस्य रूपं प्रथमव्याख्याने ; द्वितीये " वह प्रापणे " इत्यस्य द्रष्टव्यम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दज्ञानविरचिते तैत्तिरीयोपनिषच्छांकरभाष्यटिप्पणे शिक्षावल्ल्यामष्टमोऽनुवाकः ॥ ८ ॥

---

(१) होतुः प्रशंसनमु०—इति पाठः (२) धा. पा. २.५३. (३) धा. पा. १.१०२९.

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

स्वाध्यायप्रवचने च । अग्नयश्च स्वाध्यायप्रवचने च । अग्निहोत्रं च स्वाध्यायप्रवचने च । अतिथयश्च स्वाध्यायप्रवचने च । मानुषं च स्वाध्यायप्रवचने च । प्रजा च स्वाध्यायप्रवचने च । प्रजनश्च स्वाध्यायप्रवचने च । प्रजातिश्च स्वाध्यायप्रवचने च ।

सत्यमिति सत्यवचा राथीतरः ।

होपन्यासः । ऋतमिति व्याख्यातम्; स्वाध्यायोऽध्ययनम्, प्रवचनमध्यापनं ब्रह्मयज्ञो वा;—एतान्यृतादीन्यनुष्ठेयानीति वाक्यशेषः। सत्यं च सत्यवदनं, यथाव्याख्यातार्थं वा; तपः कृच्छ्रादि; दमो बाह्यकरणोपशमः; शमोऽन्तःकरणोपशमः; अग्नय आधातव्याः; अग्निहोत्रं च होतव्यम्; अतिथयश्च पूज्याः; मानुषमिति लौकिकः संव्यवहारः, तच्च यथाप्राप्तमनुष्ठेयम्; प्रजा चोत्पाद्या; प्रजनः प्रजननम्—ऋतौ भार्यागमनमित्यर्थः; प्रजातिः पौत्रोत्पत्तिः—पुत्रो निवेशयितव्य इत्येतत्;—सर्वैरेतैः कर्मभिर्युक्तस्यापि स्वाध्यायप्रवचने यत्नतोऽनुष्ठेये—इत्येवमर्थं सर्वेण सह स्वाध्यायप्रवचनग्रहणम् । स्वाध्यायाधीनं ह्यर्थज्ञानम्, अर्थज्ञानायत्तं च परं श्रेयः, प्रवचनं च तदविस्मरणार्थं धर्मवृद्ध्यर्थं च, अतः स्वाध्यायप्रवचनयोरादरः कार्यः ।

उपासकस्य नित्यकर्मणामुपासनेन सह समुच्चयः

---

व्यवहितानुवाकेन संबन्धमाह—विज्ञानादेवेत्यादिना । अपरविद्यासहकारितया तत्फलेनैव फलवत्त्वसिद्ध्यर्थमुत्तरानुवाकारम्भ इत्यर्थः । 'लौकिकसंव्यवहारः' विवाहादिः ।

पुनः पुनः स्वाध्यायप्रवचनग्रहणस्य तात्पर्यमाह—सर्वैरेतैरिति । किमिति यत्नतोऽनुष्ठेये ? तत्राऽऽह—स्वाध्यायाधीनमिति ।

त्रयाणामृषीणां मतभेदोपन्यासेन स्वाध्यायप्रवचनयोरेवाऽऽदरं विवृणोति—सत्यमित्यादिना ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दज्ञानविरचिते तैत्तिरीयोपनिषच्छांकरभाष्यटिप्पणे शिक्षावल्ल्यां नवमोऽनुवाकः ॥ ९ ॥

---

(१) पृ. ८. (२) वचनं—पाठः (३) मनुष्यविवाहाद्युत्सवेषु क्रियमाणं वध्वादिपूजनं मानुषम्—इति सा. भाष्ये । (४) पुण्योपचयहेतुत्वात्तयोः ।

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

तप इति तपोनित्यः पौरुशिष्टिः । स्वाध्यायप्रवचने एवेति नाको मौद्गल्यः । तद्धि तपस्तद्धि तपः ( १ ) ॥

प्रजा च स्वाध्यायप्रवचने च षट् च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि शिक्षावल्ल्यां नवमोऽनुवाकः ॥ ९ ॥

## अथ शिक्षावल्ल्यां दशमोऽनुवाकः ।

### ( ब्रह्मज्ञानप्रकाशः )

अहं वृक्षस्य रेरिवा । कीर्तिः पृष्ठं गिरेरिव । ऊर्ध्वपवित्रो वाजि-

सत्यमिति—सत्यमेवानुष्ठातव्यमिति सत्यवचाः, सत्यमेव वचो यस्य सोऽयं सत्यवचाः, नाम वा तस्य, राथीतरो रथीतर-(स्य?) गोत्रो राथीतराचार्यो मन्यते ।

यथोक्तेषु कर्मसु प्राशस्त्येन मतभेदः

तप इति तप एव कर्तव्यमिति—तपोनित्यस्तपसि नित्यस्तपःपरः, तपोनित्य इति वा नाम—पौरुशिष्टिः पुरुशिष्टस्यापत्यं पौरुशिष्टिराचार्यो मन्यते। स्वाध्यायप्रवचने एवानुष्ठेये इति नाको नामतः, मुद्गलस्यापत्यं मौद्गल्य आचार्यो मन्यते । तद्धि तपस्तद्धि तपः—हि यस्मात्स्वाध्यायप्रवचने एव तपः, तस्मात्ते एवानुष्ठेये इति । उक्तानामपि सत्यतपःस्वाध्यायप्रवचनानां पुनर्ग्रहणमादरार्थम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवतः कृतौ तैत्तिरीयोपनिषच्छिक्षावल्लीभाष्ये नवमोऽनुवाकः ॥ ९ ॥

'अहं वृक्षस्य रेरिवा' इति स्वाध्यायार्थो मन्त्राम्नायः; स्वाध्यायश्च विद्योत्पत्तये —प्रकरणात्, विद्यार्थं हीदं प्रकरणम्; न चान्यार्थत्वमवगम्यते; स्वाध्यायेन च विशुद्धसत्त्वस्य विद्योत्पत्तिरवकल्पते ।

ब्रह्मयज्ञफलसिद्ध्यर्थो मन्त्रः

अहं वृक्षस्योच्छेदात्मकस्य संसारवृक्षस्य रेरिवा प्रेरयिताऽन्तर्याम्यात्मना । कीर्तिः ख्यातिर्गिरेः पृष्ठमिवोच्छ्रिता मम । ऊर्ध्वपवित्रः—ऊर्ध्वं कारणम्, पवित्रं पावनम्—ज्ञानप्रकाश्यं परमं ब्रह्म

मन्त्राम्नाय आत्मविद्याप्रकाशकः

स्वाध्यायार्थं इति जपार्थः । "इषे त्वेति शाखां छिनत्ति" इतिवदन्यत्र विनियोजकं

( १ ) मन्त्रदृग्ब्रह्मभूतः ( २ ) तुल्य—भ. गी. १५. ३–४.; कठ. उ. ६. १ ( ३ ) ऐ. उ. २.१. भाष्ये ऊर्ध्वः = परमात्मभूतः ( ४ ) वाक्योत्थबुद्धिवृत्तिद्वारा भवहानेन पवित्रम् । ( ५ ) हिरण्य. श्रौ. सू. १.२. तुल्य—आप. श्रौ. सू. १. १. १०. । स्थितं भेदलक्षणे "समेषु वाक्यभेदः स्यात्" ( जै. सू. २. १. ४७.) —"इषे त्वोर्जे त्वा" ( तै.सं. १. १. १. ) आदिष्वेकमनेकं वा यजुरिति संशये प्रश्लेषपाठानुग्रहात् "इषे त्वोर्जे त्वा" इत्यनयोरन्योन्यसन्निहितयोरेव शाखाच्छेदने चानुमार्जने च विनियोगादेकार्थतया

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

नींव स्वमृतमस्मि । द्रविणं सवर्चसम् । सुमेधा अमृतो-
क्षितः । इति त्रिशङ्कोर्वेदानुवचनम् ( १ )॥

यस्य सर्वात्मनो मम, सोऽहमूर्ध्वपवित्रः । वाजिनीव—वाजवतीव वाजमन्नं तद्वति—सवितरीत्यर्थः; यथा सवितर्यमृतमात्मतत्त्वं विशुद्धं प्रसिद्धं श्रुतिस्मृतिशतेभ्यः, एवं स्वमृतं शोभनं विशुद्धमात्मतत्त्वमस्मि भवामि ।

द्रविणं धनं सवर्चसं दीप्तिमत्—तदेवाऽऽत्मतत्त्वम्—'अस्मि' इत्यनुवर्तते; ब्रह्मज्ञानं वाऽऽत्मतत्त्वप्रकाशत्वात् सवर्चसम्, द्रविणमिव द्रविणम्, मोक्षसुखहेतुत्वात्; अस्मिन्पक्षे 'प्राप्तं मया' इत्यध्याहारः कर्तव्यः। सुमेधाः शोभना मेधा, सर्वज्ञलक्षणा वा यस्य मम सोऽहं सुमेधाः—संसारस्थित्युत्पत्त्युपसंहारकौशलयोगात्सुमेधस्त्वम् । अत एवामृतोऽमरणधर्माऽक्षितोऽक्षीणोऽव्ययः, उक्षितो वा; अमृतेन वोक्षितः सिक्तः;—"अमृतोक्षितोऽहम्" इत्यादि ब्राह्मणम् । इत्येवं त्रिशङ्कोर्ऋषेर्ब्रह्मभूतस्य ब्रह्मविदो वेदो वेदनमात्मैकत्वविज्ञानम्, तस्य प्राप्तिमनु वचनम्—वेदानुवचनमात्मनः कृतकृत्यताख्यापनार्थं वामदेववत्; त्रिशङ्कुनाऽऽर्षेण दर्शनेन दृष्टो मन्त्राम्नाय आत्मविद्याप्रकाशक इत्यर्थः ।

अस्य च जपो विद्योत्पत्त्यर्थोऽवगम्यते । 'ऋतं च'—इत्यादिकर्मोपन्यासादनन्तरं च वेदानुवचनपाठादेतदवगम्यते । एवं श्रौतस्मार्तेषु

आर्षदर्शनहेतवः

श्रुत्यादिप्रमाणमपि नोपलभ्यत इत्याह—न चान्यार्थत्वमिति । 'अक्षितमसि' इत्यादिवदुपासनाविधिशेषत्वं वा वक्तुं न शक्यते—ज्ञानसाधनक्रियाविधेः प्रक्रान्तत्वादित्यर्थः ।

'अहं वृक्षस्य' इतिमन्त्रस्यर्षिस्त्रिशङ्कुः, पङ्क्तिश्छन्दः, परमात्मा देवता, ब्रह्मविद्यार्थे जपे

वाक्यैक्यादेकं यजुरिति पूर्वपक्षयित्वा, "इषे त्वेति शाखामाच्छिनत्ति", "ऊर्जे त्वेत्यनुमार्ष्टि" इति च्छेदनानुमार्जनयोर्भेदेन विनियोगादर्थभेदभानात्प्रश्लेषपाठस्य चादृष्टार्थत्वेनापि संभवात् तद्बलाद्विधिवाक्यस्थशब्दस्य प्रतीकग्रहणेन लक्षणानुपपत्तेर्वाक्यभेदस्य न्याय्यत्वादनेकं यजुरिति राद्धान्तितम्—सं. वार्तिकटीका. २७७.

( १ ) द्विविधं हि द्रविणम्—मानुषं दैवं च । तत्र चक्षुषा दृश्यमानं सुवर्णरजतादिकं मानुषम्; श्रोत्रेण श्रूयमाणं वेदे प्रतीयमानं ब्रह्मज्ञानादिकं दैवम् । अत एव वाजसनेयिनः कस्मिंश्चिदुपासने चक्षुःश्रोत्रयोर्मानुषदैववित्तदृष्टिमामनन्ति—"चक्षुर्मानुषं वित्तम् । चक्षुषा हि तद्विन्दते । श्रोत्रं दैवम् । श्रोत्रेण हि तच्छृणोति" बृ. उ. १.४.१७.—इति । तत्र दैववित्तमभिप्रेत्य सवर्चसमिति विशेष्यते । वर्चो बलं तद्योगात्सवर्चसम्, बलवत्त्वं च दैववित्तस्य ब्रह्मज्ञानस्य सर्वसंसारनिवर्तकत्वादुपपन्नम् । ( २ ) षड्भावविकाररहितः ( ३ ) महान्—निघण्टु ३.३.५. (४) ? प्रक्षिप्तो भाति ; ०अहमिति ।—इत्यतोवानेवोपसंहारात्मकः पाठः स्यात् । ( ५ ) स्वानुभावप्रकटीकरणमेव तद्वचनम् ( ६ ) ऋ. सं. ४.२७. १.; ऐ.उ. २.१.; बृ.उ. १.४.१०-; ब्र.सू. ३.३.३२. (७) नवमानुवाके. (८) एकादशानुवाके (९) छां.उ.३.१७.६.

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

**अहंस्थ्द् ॥**

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि शिक्षावल्ल्यां दशमोऽनुवाकः ॥ १० ॥

---

## अथ शिक्षावल्ल्यामेकादशोऽनुवाकः ।

### ( अनुशासनम् )

**वेदमनूच्याऽऽचार्योऽन्तेवासिनमनुशास्ति ।**

**नित्येषु कर्मसु युक्तस्य निष्कामस्य परब्रह्मविविदिषोरार्षाणि दर्शनानि प्रादुर्भवन्त्यात्मादिविषयाणीति ॥**

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवतः कृतौ तैत्तिरीयोपनिषच्छिक्षावल्लीभाष्ये दशमोऽनुवाकः ॥ १० ॥

---

'वेदमनूच्य' इत्येवमादिकर्तव्यतोपदेशारम्भः प्राग्ब्रह्मविज्ञानान्नियमेन कर्तव्यानि श्रौतस्मार्तकर्माणीत्येवमर्थः,—अनुशासनश्रुतेः पुरुषसंस्कारार्थत्वात्; संस्कृतस्य हि विशुद्धसत्त्वस्याऽऽत्मज्ञानमञ्जसैवोत्पद्यते । "तपसा कल्मषं हन्ति विद्ययाऽमृतमश्नुते" इति हि स्मृतिः; वक्ष्यति च—'तपसा ब्रह्म विजिज्ञासस्व' इति । अतो विद्योत्पत्त्यर्थमनुष्ठेयानि कर्माणि, अनुशास्तीत्यनुशासनशब्दात्; अनुशासना-

शुद्धिद्वारा ज्ञानहेतवः कर्माणि मुमुक्षुणा यावदात्मज्ञानं नियमेन कर्तव्यानि

---

विनियोगः । न केवलमस्य जपो विद्यार्थः, पूर्वोक्तानि कर्माण्यपीत्याह—ऋतं चेत्यादि ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दज्ञानविरचिते तैत्तिरीयोपनिषच्छांकरभाष्यटिप्पणे शिक्षावल्ल्यां दशमोऽनुवाकः ॥ १० ॥

---

उत्तरानुवाकस्य तात्पर्यमाह—वेदमनूच्येत्यादिना । विद्योत्पत्त्यर्थं नित्यनैमित्तिकान्य-

---

( १ ) "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" (बृ. उ. ४.४.२२.) —इति प्रवृत्तिरूपाणां वेदानुवचनादीनां विविदिषोत्पादनद्वारा बहिरङ्गसाधनत्वावगमात्, "शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्यति" ( बृ. उ. ४. ४. २३. )—इति निवृत्तिरूपाणां शमदमादीनां विद्योत्पत्तौ साधनत्वेन विधीयमानतयाऽन्तरङ्गसाधनत्वावगमात्, यज्ञादीनि शमदमादीनि च विद्या स्वोत्पत्तावपेक्षते । "कषायपक्तिः कर्माणि ज्ञानं तु परमा गतिः । कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते" ॥ "भावितैः करणैश्चायं बहुसंसारयोनिषु । आसादयति शुद्धात्मा मोक्षं वै प्रथमाश्रमे" ॥ —मोक्षधर्मे २२६–२६.; "प्रत्यग्विविदिषासिद्ध्यै वेदानुवचनादयः । ब्रह्मावाप्त्यै तु तत्त्याग ईप्सन्तीति श्रुतेर्बलात्" ॥—सं. वार्तिके. १४.; "न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते" । "आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते । योगारूढस्य तस्यैव शमः कारणमुच्यते" ॥ भ. गी. ३. ४; ६. ३. "धर्मात्सुखं च ज्ञानं च"—इत्यादिवचनेभ्यो ज्ञानमत्यन्तोत्कृष्टपुण्यकार्यम् । (२) संस्कारो नाम स्वाश्रयस्य प्रागुद्भूतावस्थासमानावस्थान्तरापादकोऽतीन्द्रियो धर्मः । ( ३ ) मनु. १२. १०४. ( ४ ) तै. उ. ३.२.

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

सत्यं॒ वद । धर्मं॒ चर ।
स्वाध्यायान्मा प्रमदः । आचार्याय प्रियं धनमाहृत्य
प्रजातन्तुं मा व्यवच्छेत्सीः ।

तिक्रमे हि दोषोत्पत्तिः; प्रागुपन्यासाच्च कर्मणां; केवलब्रह्मविद्यारम्भाच्च पूर्वं कर्माण्युपन्यस्तानि; उदितायां च विद्यायाम् "अभयं प्रतिष्ठां विन्दते", "न बिभेति कुतश्चन", "किमहं साधु नाकरवम्"—इत्येवमादिना कर्मनैष्किञ्चन्यं दर्शयिष्यति—इत्यतोऽवगम्यते पूर्वोपचितदुरितक्षयद्वारेण विद्योत्पत्त्यर्थानि कर्माणीति; मन्त्रवर्णाच्च—"अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते" इति । ऋतादीनां पूर्वत्रोपदेश आनर्थक्यपरिहारार्थः, इह तु ज्ञानोत्पत्त्यर्थत्वात्कर्तव्यनियमार्थः।

वेदमनूच्याध्याप्याऽऽचार्योऽन्तेवासिनं शिष्यमनुशास्ति—ग्रन्थग्रहणादनु पश्चाच्छास्ति तदर्थं ग्राहयतीत्यर्थः। अतोऽवगम्यते—अधीतवेदस्य धर्मजिज्ञासामकृत्वा गुरुकुलान्न समावर्तितव्यमिति; "बुद्ध्वा कर्माणि"—इति स्मृतेश्च ।

अधीतवेदस्य कर्तव्यानुशासनम्

---

वश्यान्यनुष्ठेयानीत्येको नियम उक्तः; प्रागेव चानुष्ठेयानीति नियमान्तरमाह—प्रागुपन्यासाच्च कर्मणामिति । संग्रहवाक्यं विवृणोति—केवलेत्यादिना । अविद्यया कर्मणा मृत्युमधर्मं तीर्त्वा—इति मन्त्रोऽपि विद्योत्पत्तेः प्रागेव कर्मानुष्ठानं सूचयतीत्यर्थः। "ऋतं च स्वाध्यायप्रवचने च" इत्यादिना पूर्वत्र कर्मानुष्ठानमुक्तमेव, अतः पौनरुक्त्यमित्याशङ्क्याऽऽह—ऋतादीनामिति । विचारमकृत्वा गुरुकुलान्न निवर्तितव्यम्, किंत्वध्ययनविधेरर्थावबोधद्वारेण पुरुषार्थपर्यवसायितासिद्ध्यर्थमक्षरग्रहणानन्तरमर्थावबोधाय प्रयतितव्यमित्याह—ग्रन्थग्रहणादन्विति । 'वेदमधीत्य स्नायात्'—इति स्मृतिरप्येतच्छ्रुतिविरुद्धेत्याह—अतोऽवगम्यत इति ।

---

(१) २.७. (२) २.९. (३) २.९. (४) "प्रत्यक्प्रवणतां बुद्धेः कर्माण्युत्पाद्य शुद्धितः। कृतार्थान्यस्तमायान्ति प्रावृडन्ते घना इव ॥ तस्मान्मुमुक्षुभिःकार्यमात्मज्ञानाभिलाषिभिः। नित्यं नैमित्तिकं कर्म सदैवात्मविशुद्धये"—नै.सि. १.४९–५०. (५) ई. उ.११. (६) उपासनादेव स्वाराज्यश्रवणादानर्थक्यं कर्मणामाशङ्क्य तत्परिहारार्थं "ऋतं च"—इत्यादिरनुवाकः ९; "वेदमनूच्य"—इत्यादिस्तु नियमद्वयसिद्ध्यर्थं इति न पुनरुक्तिरित्यर्थः (७) आप. ध. सू. २.२१. ५. बुद्ध्वा कर्माणि यत्कामयेत तदारभेत—इति समग्रसूत्रपाठः। (८) ९. अनुवाके. (९) "वेदानधीत्य वेदाङ्गं साङ्गोपाङ्गविधानतः । स्नायाद्विध्युक्तमार्गेण ब्रह्मचर्यव्रतं चरन्"॥ इति योगियाज्ञवल्क्यसंहितायाम्–१.२०–२१. ; "वेदं वेदौ तथा वेदान्, वेदान् वा चतुरो द्विजः । अधीत्य चाधिगम्यार्थं ततः स्नायाद्यथाविधि" ॥ कूर्म–पु. उत्तरभा. १५-१.; तुल्य—"वेदमधीत्य स्नास्यन्"—आप. गृ. सू. १२.१. बौ. गृ.सू. २.६. १.; बौ. गृ. परिभाषा—सू. १.१२.

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

सत्यान्न प्रमंदितव्यम् । धर्मान्न प्रमंदितव्यम् । कुशलान्न प्रमंदितव्यम् । भूत्यै न प्रमंदितव्यम् । स्वाध्यायप्रवचनाभ्यां न प्रमंदितव्यम् (१) । देवपितृकार्याभ्यां न प्रमंदितव्यम् । मातृदेवो भव । पितृदेवो भव । आचार्यदेवो भव । अतिथिदेवो भव ।

कथमनुशास्ति ? इत्याह—'सत्यं वद' यथाप्रमाणावगतम्, वक्तव्यं च वद । तद्वद्धर्मं चर; धर्म इत्यनुष्ठेयानां सामान्यवचनं सत्यादिविशेषनिर्देशात् ।

अनुशासनसंग्रहः—कर्तव्यसारम्

स्वाध्यायादध्ययनान्मा प्रमदः प्रमादं मा कार्षीः । आचार्यायाऽऽचार्यार्थं प्रियमिष्टं धनमाहृत्याऽऽनीय दत्त्वा विद्यानिष्क्रयार्थम्, आचार्येण चानुज्ञातोऽनुरूपान् दारानाहृत्य, प्रजातन्तुं प्रजासन्तानं मा व्यवच्छेत्सीः—प्रजासन्ततेर्विच्छित्तिर्न कर्तव्या; अनुत्पद्यमानेऽपि पुत्रे पुत्रकाम्यादिकर्मणा तदुत्पत्तौ प्रयत्नः कर्तव्य इत्यभिप्रायः,—प्रजा-प्रजन-प्रजाति-त्रयनिर्देशसामर्थ्यात्; अन्यथा 'प्रजनश्च'—इत्येतदेकमेवावक्ष्यत् ।

सकृदनुष्ठितश्रौतस्मार्तयोः परित्यागरूपं प्रमादं निषेधति ।

सत्यान्न प्रमदितव्यं प्रमादो न कर्तव्यः, सत्याच्च प्रमदनमनृतप्रसङ्गः,—प्रमादशब्दसामर्थ्यात्, विस्मृत्याप्यनृतं न वक्तव्यमित्यर्थः; अन्यथाऽसत्यवदनप्रतिषेध एव स्यात् । तथा धर्मान्न प्रमदितव्यम्—'धर्म' शब्दस्यानुष्ठेयविषयत्वात्, अननुष्ठानं प्रमादः, स न कर्तव्यः; अनुष्ठातव्य एव धर्म इति यावत् । एवं कुशलादात्मरक्षार्थात्कर्मणो न प्रमदितव्यम् । भूतिर्विभूतिः, तस्यै भूत्यै भूत्यर्थान्मङ्गलयुक्तात्कर्मणो न प्रमदितव्यम् । स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम्,—स्वाध्यायोऽध्ययनम्, प्रवचनमध्यापनम्, ताभ्यां न प्रमदितव्यम्,—ते हि नियमेन कर्तव्ये इत्यर्थः ।

तथा देवपितृकार्याभ्यां न प्रमदितव्यम्, दैवपित्र्ये कर्मणी कर्तव्ये । मातृदेवो माता देवो यस्य स त्वं मातृदेवो भव स्याः । एवं पितृदेव आचार्यदेवोऽतिथिदेवो भव,—देवतावदुपास्या एवैत इत्यर्थः ।

मात्रादयो देवताबुद्ध्या पूजनीयाः

---

वक्तव्यमिति—वचनार्हम्—परस्य हितमित्यर्थः ।

---

(१) स्वाध्यायोऽध्येतव्यः—तै. आ. २. १५. ७., शत. ब्रा. ११.५.६.७. (२) "अनृतवदनविषये दोषश्रुतेश्च" इत्यधिकः पाठः । काशीमुद्रितपुस्तके,—"योऽनृतमभिवदति समूलो वा एष परिशुष्यति" (प्र. उ. ६. १. वाक्यव्युत्क्रमः) । "न सत्यात्परमो धर्मो नानृतात्पातकं परम्" (शां.प. १६०.२४.) इति स्मृतेः—इति च तत्र टिप्पणी । (३) अनुष्ठातव्यः । एवं कुश°—इति पाठः । (४) पौराणिकं विनायकव्रतानन्तव्रतादिकं देवकार्यम्; प्रतिसांवत्सरादिकं पितृकार्यम् ।

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

यान्यनवद्यानि कर्माणि । तानि सेवितव्यानि ।
नो इतराणि । यान्यस्माकꣳ सुचरितानि ।
तानि त्वयोपास्यानि (२) । नो इतराणि ।
ये के चास्मच्छ्रेयांꣳसो ब्राह्मणाः ।
तेषां त्वयाऽऽसनेन प्रश्वसितव्यम् ।

यान्यपि चान्यान्यनवद्यान्यनिन्दितानि शिष्टाचारलक्षणानि कर्माणि, तानि सेवितव्यानि कर्तव्यानि त्वया; नो कर्तव्यानीतराणि सावद्यानि शिष्टकृतान्यपि । यान्यस्माकम्—आचार्याणां सुचरितानि शोभनचरितान्याम्नायाद्यविरुद्धानि, तान्येव त्वयोपास्यान्यदृष्टार्थान्यनुष्ठेयानि, नियमेन कर्तव्यानीत्येतत्; नो इतराणि विपरीतान्याचार्यकृतान्यपि ।

निन्द्यानिन्द्यकर्मविवेकः

ये के च—अविशेषिता आचार्यत्वादिधर्मैरस्मदस्मत्तः श्रेयांसः प्रशस्यतराः—ते च ब्राह्मणाः, न क्षत्रियादयः,—तेषामासनेनाऽऽसनदानादिना त्वया प्रश्वसितव्यम्—प्रश्वसनं प्रश्वासः, श्रमापनयः—तेषां श्रमस्त्वयाऽपनेतव्य इत्यर्थः; तेषां वाऽऽसने गोष्ठीनिमित्ते समुदिते, तेषु न प्रश्वसितव्यं प्रश्वासोऽपि न कर्तव्यः, केवलं तदुक्तसारग्राहिणा भवितव्यम् ।

महापुरुषसेवाप्रकारः

---

(१) ये के च=अविशेषिताः–संबन्धिनोऽसंबन्धिनो वा तव । विशेषिताः–इति पाठे लोकप्रसिद्धा इत्यर्थः । (२) अत्र केचित्—बृहदारण्यके दृप्तबालाकेर्ब्राह्मणस्य क्षत्रियमजातशत्रुं प्रति "स होवाच गार्ग्य उप त्वा यानि" (२.१.१४) इत्युपगमाभिधानदर्शनात्, तथा कैकेयं क्षत्रियं प्रति प्राचीनशालादीनां षण्णां मुनीनां वैश्वानरविद्यालाभायोपगमप्रवृत्तिदर्शनात् (छां. उ. ५.११), उत्तमं ब्राह्मणं प्रत्यपि विद्योत्कर्षवतः क्षत्रियस्य गुरुत्वमस्ति–इति मन्यन्ते । अन्ये तु—"प्रतिलोमं वै तद्यद्ब्राह्मणः क्षत्रियमुपेयात्, ब्रह्म मे वक्ष्यतीति । व्येव त्वा ज्ञापयिष्यामि" इति क्षत्रियेणाजातशत्रुणा गुरुत्वमङ्गीकृत्य गार्ग्यं प्रति विज्ञापनदर्शनात्, तथा प्राचीनशालादीनपि कैकेयेन "तान्हानुपनीयैवैतदुवाच" इत्युपसदनमन्तरेणैव वैश्वानरविद्याभिधानदर्शनात्, उत्तमेनाभिहितमपि गुरुत्वं क्षत्रियादिना नाङ्गीकर्तव्यम्–इति मन्यन्ते । आपत्काले "ब्राह्मणस्याब्राह्मणाद्विद्योपयोगः, अनुगमनं, शुश्रूषाऽऽसमाप्तेः" इति गौतमः १.७.१–३; तथैव आपस्तंबः २.४.२५–२७.; "अब्राह्मणादध्ययनमापत्काले विधीयते । अनुव्रज्या च शुश्रूषा यावदध्ययनं गुरोः ॥ नाब्राह्मणे गुरौ शिष्यो वासमात्यन्तिकं वसेत् । ब्राह्मणे चाननूचाने काङ्क्षन् गतिमनुत्तमाम्" ॥ इति मनुस्मृ. २.२४१—२, १५४–५ एवमादिभिर्निषेधाद्ब्राह्मणस्य क्षत्रियं प्रत्युपगतिरयुक्तेत्यर्थः । "आचार्यस्तूहापोहग्रहणधारणशमदमदयानुग्रहादिसम्पन्नः, लब्धागमः, दृष्टादृष्टभोगेष्वनासक्तः, त्यक्तसर्वकर्मसाधनः, ब्रह्मवित्, ब्रह्मणि स्थितः, अभिन्नवृत्तः, दम्भदर्पकुहकशाठ्यमायामात्सर्यानृताहंकारममत्वादिदोषविवर्जितः, केवलपरानुग्रहप्रयोजनः, विद्योपयोगी"–इति व्याख्यात आचार्यशब्द आचार्यैः उपदेशसाहस्रीगद्यप्रबन्धे ।

३

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

श्रद्धया देयम् । अश्रद्धयाऽदेयम् । श्रिया देयम् ।
ह्रिया देयम् । भिया देयम् । संविदा देयम् ।
अथ यदि ते कर्मविचिकित्सा वा वृत्तविचिकित्सा वा स्यात्
(३)। ये तत्र ब्राह्मणाः संमर्शिनः । युक्ता आयुक्ताः । अलूक्षा
धर्मकामाः स्युः । यथा ते तत्र वर्तेरन् । तथा तत्र वर्तेथाः ।
अथाभ्याख्यातेषु । ये तत्र ब्राह्मणाः संमर्शिनः । युक्ता आ-
युक्ताः । अलूक्षा धर्मकामाः स्युः । यथा ते तेषु वर्तेरन् ।
तथा तेषु वर्तेथाः ।

किंच यत्किंचिद्देयं तच्छ्रद्धयैव दातव्यम्, अश्रद्धयाऽदेयं न दातव्यम्; श्रिया विभूत्या देयं दातव्यम्; ह्रिया लज्जया च देयम्; भिया च भयेन, संविदा च;—संविन्मित्रादिकार्यम् । (दानप्रकारः)

अथैवं वर्तमानस्य यदि कदाचित्ते तव श्रौते स्मार्ते वा कर्मणि, वृत्ते वाऽऽचारलक्षणे विचिकित्सा संशयः स्याद् भवेत्, ये तत्र तस्मिन्देशे काले वा ब्राह्मणाः—'तत्र' कर्मादौ 'युक्ता' इति व्यवहितेन संबन्धः कर्तव्यः—संमर्शिनो विचारक्षमाः, युक्ता अभियुक्ताः कर्मणि वृत्ते वा, आयुक्ता अ–परप्रयुक्ताः, अलूक्षा अरूक्षा अक्रूरमतयः, धर्मकामा अदृष्टार्थिनोऽकामहता इत्येतत्—स्युर्भवेयुः, ते यथा (येन प्रकारेण ब्राह्मणाः) तत्र तस्मिन्कर्मणि वृत्ते वा वर्तेरन्, तथा त्वमपि वर्तेथाः । (संदिग्धधर्मनिर्णयोपायः)

अथाभ्याख्यातेष्वभ्युक्ता दोषेण संदिह्यमानेन संयोजिताः केनचित्, तेषु च यथोक्तं सर्वमुपनयेत्—'ये तत्र' इत्यादि । (निन्दितपुरुषाव्यवहार्यत्वे निर्णयोपायः)

---

एवं कर्तव्यमर्थमुपदिश्यानुष्ठानकाले समुत्पन्नसंशयनिवृत्त्यर्थं शिष्टाचारः प्रमाणयितव्य इत्याह—अथैवमित्यादिना । अ–परप्रयुक्ता इति—स्वतन्त्रा इत्यर्थः । अभ्युक्ता अभिशस्ता इत्यर्थः ॥

---

(१) स्वापेक्षया हीनधनेषु दानं दृष्ट्वा लज्जयेति यावत् । (२) राजादिभयेन, शास्त्रभीत्या वा, कार्पण्यापवादभयेन वा । (३) विवाहादौ प्रसिद्धो लौकिकसंव्यहारः, संविन्मैत्रीति चोच्यते । (४) मतिविभ्रमात् ।

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

एष आदेशः । एष उपदेशः । एषा वेदोपनिषत् । एतदनुशासनम् ।
एवमुपासितव्यम् । एवमु चैतदुपास्यम् ( ४ ) ॥
स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यं तानि त्वयोपास्यानि
स्याच्चेषु वर्तेरन्त्सप्त च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि शिक्षावल्ल्यामेकादशोऽनुवाकः ॥ ११ ॥

---

उपसंहारः

एष आदेशो विधिः । एष उपदेशः पुत्रादिभ्यः पित्रादीनाम् । एषा वेदोपनिषद्वेदरहस्यम्, वेदार्थ इत्येतत् । एतदेवानुशासनमीश्वरवचनम्, आदेशवाक्यस्य विधेरुक्तत्वात्, सर्वेषां वा प्रमाणभूतानामनुशासनमेतत् । यस्मादेवम्, तस्मादेवम्, यथोक्तं सर्वमुपासितव्यं कर्तव्यम् । 'एवमु चैतदुपास्यम्', उपास्यमेव चैतत्, नानुपास्यमिति; आदरार्थं पुनर्वचनम् ॥

---

( विद्याकर्मविवेकः—कर्मणां मोक्षसाधनत्वमङ्गीकुर्वताम्, ज्ञानसाधनत्वानङ्गीकुर्वताम्, समुच्चयवादिनां च मतनिरासेन, ज्ञानहेतुत्वसिद्धान्तः )

कर्मभ्य उत विद्यायाः परं श्रेय इति चिन्ता

अत्रैतच्चिन्त्यते विद्याकर्मणोर्विवेकार्थम्—(१) किं कर्मभ्य एव केवलेभ्यः परं श्रेयः ? (२) उत विद्यासव्यपेक्षेभ्यः ? (३) आहोस्विद्विद्याकर्मभ्यां संहताभ्याम् ? ( ४ ) विद्याया वा कर्मापेक्षायाः ? ( ५ ) उत केवलाया एव विद्यायाः ?—इति ।

---

अंत्यानुवाके केवलाया विद्याया निःश्रेयससाधनत्वमुक्तमपि स्फुटीकर्तुं, कर्मविधिमुपलभ्य प्रसङ्गात् पुनर्विचारयितुमुपक्रमते—अत्रैतच्चिन्त्यत इत्यादिना । विवेकार्थमिति पृथक्फलत्वज्ञापनार्थमित्यर्थः । 'भूतं भव्यायोपदिश्यते' इति न्यायेनाऽऽत्मज्ञानस्यापि कर्मकर्तृसं—

---

(१) ' 'सत्य वद—इत्यारभ्य तथा तेषु वर्तेथाः—इत्यन्तो योऽयं ग्रन्थसन्दर्भः स एष आदेशः श्रौतो विधिः। …आदेशस्य समीपवर्तित्वात्स्मार्तो विधिरुपदेशः । स्मृतीनां वेदमूलतया तत्समपिवार्तित्वम् । अप्रत्यक्षश्रुतिमूलासु स्मृतिष्वपि 'सत्यं वद' इत्यादिवाक्यार्थ एवमेवोपलभ्यते । येयं सत्यं वद-इत्याद्युक्तिः सैषा वेदोपनिषत्—वेदरहस्यं विध्यर्थवादमन्त्रात्मके वेदे विधिरूपः सारभागः''—सायणाचार्यभाष्ये.(२) सत्याद्युपासितव्यं कर्तव्यतया बुद्धौ ध्यातव्यम् । ततश्च यथा व्याख्यातं तथा कुर्यादित्येतदुपास्यमित्यनेन विवक्षितमित्यर्थः—इति पदद्वयस्य विशेषो दर्शितस्तै. उ. वार्तिकटीकायाम्—१. १०. ८३. ( ३ ) भाष्योपोद्घाते । ( ४ ) शावरभाष्ये ४.१. १८; तुलय २. १. ४ भूतस्य भव्यार्थतायां दृष्टार्थता । ६. १. १. ' भूतं द्रव्यं, भव्यं कर्म; भूतस्य च भव्यार्थता न्याय्या ' । शास्त्रदीपिकायां " भूतं च स्वर्गपश्वादि द्रव्यं भाव्याय कर्मणे । उपदेश्यं न भूताय भाव्यकर्मोपदेशनम् " ॥ ; संक्षेपशा. १. ३९५, ४८२-४.

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

(१) तत्र केवलेभ्यः कर्मभ्य एव स्यात्, समस्तवेदार्थज्ञानवतः कर्माधिकारात्

कर्मणां मोक्ष-साधनता—पक्षः

"वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना" इति स्मरणात्। अधिगमश्च सहोपनिषदर्थेनाऽऽत्मज्ञानादिना—"विद्वान् यजते", "विद्वान् याजयति" इति च विदुष एव कर्मण्यधिकारः प्रदृश्यते सर्वत्र; "ज्ञात्वा चानुष्ठानम्" इति च। कृत्स्नश्च वेदः कर्मार्थ इति हि मन्यन्ते केचित्; कर्मभ्यश्चेत् परं श्रेयो नावाप्यते, वेदोऽनर्थकः स्यात्।

न, नित्यत्वान्मोक्षस्य; नित्यो हि मोक्ष इष्यते। कर्मकार्यस्य त्वनित्यत्वं प्रसिद्धं लोके; कर्मभ्यश्चेच्छ्रेयः, अनित्यं स्यात्, तच्चानिष्टम्।

'न मोक्षः कर्मसाधनः'

काम्यप्रतिषिद्धयोरनारम्भात्, आरब्धस्य च कर्मण उपभोगेन क्षयात्, नित्यानुष्ठानाच्च प्रत्यवायानुत्पत्तेः, ज्ञाननिरपेक्ष एव मोक्षः—इति चेत्, न, शेषकर्मसंभवात्, तन्निमित्ता शरीरान्तरोत्पत्तिः प्राप्नोतीति प्रत्युक्तम्; कर्मशेषस्य च नित्यानुष्ठानेनाविरोधात् क्षयानुपपत्तिरिति च। यदुक्तम् 'समस्तवेदार्थज्ञानवतः कर्माधिकारात्' इत्यादि—तच्च न, श्रुतज्ञानव्यतिरेकादुपासनस्य। श्रुतज्ञानमात्रेण हि कर्मण्यधिक्रियते, नोपासनमपेक्षते। उपासनं च श्रुतज्ञानादर्थान्तरं

—स्कारतया कर्मविधिशेषत्वात्, श्रुतस्यापि फलस्यार्थवादमात्रत्वात्, कर्मभ्य एव परं श्रेय इति पूर्वपक्षः।

सिद्धान्तमाह—न नित्यत्वादित्यादिना। यद्यप्यध्ययनविधिप्रयुक्तः कृत्स्नो वेदार्थ एकेन विचारयितव्यः, तथाऽप्यध्ययनविधौ प्रतिवाक्याध्ययनं प्रतिवाक्यार्थविचारं च व्यापारभेदात्, तत्प्रयुक्त्याऽभ्युदयकामस्य कर्मोपयोगिवाक्यार्थज्ञानवत्त्वमात्रेण कर्मण्यधिकारसंभवात्, ब्रह्मसाक्षात्कारस्य तत्रानुपयोगित्वात्, न समस्तवेदार्थज्ञानवतः कर्माधिकारे प्रमाणमस्तीत्याह—तच्च नेति। यद्यपि चाध्ययनविधिप्रयुक्तो वेदान्तविचारोऽपि कृतो गुरुकुल एव, तथाऽपि न

(१) मनुस्मृ. २.१६५ (२) तै.सं. ३.२. १.१,२ इत्यसकृत्। तुलय–ज्ञाते च वाचनं न ह्यविद्वान्विहितोऽस्ति—इति जै. सू. ३. ८.१८, शाबरभाष्यं च। (३) ? तुलय–एवं विद्वांसो यजन्ते च याजयन्ति च–ऐ.ब्रा.४.४.३ (४) ? तुलय 'यदेव विद्ययेति हि'–ब्र. सू. ४.१.१८ (५) प्राभाकराः (६) "तद्यथेह कर्मजितो लोकः क्षीयते"—(छां. उ. ८.१.६) इति न्यायानुगृहीतश्रुतिविरोधात्—इत्यधिकः पाठः का. मु. पुस्तके. (७) पृ. ३. (८) तुलय–"यद्यपि कृत्स्नवेदाध्ययनविधिप्रयुक्तो विचारो वेदार्थमेव विषयीकुर्यात्, तथाऽप्यनन्यथासिद्धेन सूत्रगतधर्मग्रहणेन वेदार्थैकदेशविषयः संपद्यते; न चैवमध्ययनविधिविरोधः सामान्यरूपस्य विधेः प्रतिवाक्याध्ययनं प्रतिवाक्यविचारं च व्यापारभेदेन वेदार्थैकदेशविचारेऽपि चरितार्थत्वात्;—यथा चक्षुषा रूपं पश्येदिति विधेर्नीलरूपदर्शनमात्रेणापि चरितार्थता तद्वत्। अथ तत्र सर्वरूपदर्शनस्याशक्यत्वात्संकोचस्तर्ह्यत्राप्यविरक्तेनानधिकारिणा वेदान्तानां विचारयितुमशक्यत्वादेव संकोचोऽस्तु। न चैवमध्ययनेऽपि संकोचप्रसङ्गः। तत्र विरक्तेरधिकारं प्रत्यप्रयोजकत्वात्"। वि. प्र. सं. पृ. १३०; तथा विवरणपृ. १२८. । श्रीमदप्पयदीक्षितानां वादनक्षत्रमालायां 'अध्ययनविधेश्च ज्ञानफलकत्वनिराकरणवादः' द्रष्टव्यः सुधीभिः।

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

विधीयते मोक्षफलम् ; अर्थान्तरप्रसिद्धिश्च स्यात्, "श्रोतव्यः" इत्युक्त्वा तद्व्यतिरेकेण "मन्तव्यो निदिध्यासितव्यः" इति यत्नान्तरविधानात्, मनननिदिध्यासनयोश्च प्रसिद्धं श्रवणज्ञानादर्थान्तरत्वम् ।

समस्तवेदार्थज्ञानवतोऽधिकारः,—उपासनासाध्यस्य ब्रह्मसाक्षात्कारस्य पृथग्भावादित्याह— श्रुतज्ञानेति । श्रुताद्गुरुकुले विचारिताद्वाक्यात्कर्मानुष्ठानोपयोगि यज्ज्ञानम्, तावन्मात्रेण कर्म-

(१) अत्र श्रीकण्ठभाष्यं (१. १. ४) कटाक्षितं श्रीमद्भगवत्पादैः । श्रीकण्ठाचार्या भगवत्पादेभ्यः प्राचीना इति केचित्; अपरे तु ते तत्समकालीना इति मन्यन्ते । ग्रन्थगौरवदोषमनादृत्य, अत्यन्तोपयोगित्वात्तद्भाष्यभागोऽत्र मुद्र्यते—"ननु, ब्रह्मणि वेदवाक्यादेव ज्ञाते तज्ज्ञानविधिरप्रयोजनः, तत्प्रयोजनस्य पूर्वज्ञानादेव सम्भवादिति चेत्, न । वाक्येन परोक्षत्वेन ज्ञाते ब्रह्मणि तत्साक्षात्काराय ज्ञानविधेरुपपत्तेः । कथं भेदः ?—इति चेत्, यच्छब्दजन्यं न तत्साक्षात्कारहेतुः ; किंतु उपासनारूपं ज्ञानमेव । तथाच श्रूयते—'ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात्' (कै. उ. ७), 'ज्ञाननिर्मथनादेव पाशं दहति पण्डितः' (कै. उ. ११) इत्यादिषु, 'ज्ञात्वा देवं मुच्यते सर्व पाशैः' (श्वे. उ. १. ८.), 'ईशं तं ज्ञात्वा अमृता भवन्ति' (श्वे. उ. ३. ७.) इत्यादिषु च । तथाहि 'श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः । ज्ञात्वा च सततं ध्येय एते दर्शनहेतवः' इत्यत्र श्रवणमननसंपन्नज्ञानाविनाभूतं निदिध्यासनं ब्रह्मणः साक्षात्कारो निमित्तमिति स्मर्यते । अतः उपासनारूपज्ञानं मोक्षफलं विधीयते । 'आत्मन्येवात्मानं पश्येत् (बृ. उ. ४.४.२३.), 'शम्भुराकाशमध्ये ध्येयः', (अथर्वशिखा.) 'तज्जलानिति शान्त उपासीत' (छां.उ.३.१४.१.) 'इति प्राचीनयोग्योपास्व' (तै. उ. १.६) इत्यादिषु च । तथा 'ब्रह्मविदाप्नोति परम्' (तै. उ. २. १) इत्यादिषु ब्रह्मस्वरूपोपासनातत्फलादिकमुपदिश्यते । अन्यथा सत्यत्वादिविशिष्टब्रह्मणा सह कथं सकलकामावाप्तिः फलं तादृशब्रह्मसाक्षात्करणं च सिद्ध्यति । तस्मात् 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै. उ. २.१), 'आनन्दो ब्रह्म' (तै.उ. ३.६.), 'सत्यात्म प्राणारामं मनआनन्दम्, शान्तिसमृद्धममृतम्' (तै. उ.१.६.), 'ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् । ऊर्ध्वरेतं विरूपाक्षम्' (महाना. उ.१२.१.) —इति सत्यज्ञानानन्तरूपं स्वात्मारामामुपशान्तसकलोपद्रवकलङ्कं सकलमङ्गलात्मकं परमशक्त्यविनाभूततया शबलरूपत्वेन कृष्णपिङ्गलं विरूपाक्षं त्रिलोचनं ब्रह्म उपक्रमादितात्पर्यलिङ्गैर्निरूप्यते । 'यो वेद निहितं गुहायाम्' (तै. उ. २.१), 'इति प्राचीनयोग्योपास्व' (तै.उ. १.६.) इति ज्ञानाविनाभूतं तदुपासनं च विधीयते । 'सर्वान्कामान्' (तै. उ. २.१.) इत्यादिषु सकलकामावाप्तिर्ब्रह्मणा सहोपासकानामवगम्यते । अतो निष्कामनिजधर्मोपेतो निषिद्धकाम्यकर्मरहितो यथाश्रुतिस्मृतिचोदितकर्मानुष्ठानसम्पन्नचित्तशुद्धिः शमाद्यनुगृहीतपरमशिवभक्तिभावित एव मुमुक्षुः श्रुतिसारेभ्यः शिवाभिधेयं परं ब्रह्म विदित्वा 'तमुपासीत' इति ज्ञानोपासनाविधिरुपपन्नः" । (२) बृ. उ. २.४. ५. (३) "न च वयं ज्ञानकर्मणोः सर्वत्रैव समुच्चयं प्रत्याचक्ष्महे । यत्र प्रयोज्यप्रयोजकभावो (निमित्तनैमित्तिकभावो) ज्ञानकर्मणोस्तत्र नास्मत्पित्रापि शक्येत निवारयितुम्"।—यथा चोरधिया स्थाणुं गृहीत्वा भीतः पलायते, एवं बुद्ध्यादिरूपेणात्मानं गृहीत्वा कर्म करोति । तेन तत्र कर्मप्रवृत्तिनिमित्तत्वाज्ज्ञानं कर्माङ्गमित्यर्थः । आत्मज्ञानस्य तु कर्म प्रवृत्तौ प्रयोज्यप्रयोजकभावाभावान्न तेन समुच्चयः । स्थाणुरेवायं न चोर इति तत्त्वज्ञानं यथा नाङ्गमेवमात्मतत्त्वविज्ञानमकर्तृब्रह्माहस्मीति ज्ञानं कर्मप्रवृत्तौ नाङ्गमित्यर्थः-नै. सि. १.६०-१. कर्मानुष्ठानकालीनं वेदनं तत्कर्म फल एवातिशयं जनयति । कर्मस्वरूपभेदाङ्गविशेषप्रयुक्तक्रमाधिकारादिविशेषज्ञानस्य देहादिव्यतिरिक्तात्मज्ञानस्य च कर्मविशेषाधिकारिण्यपेक्षितत्वेऽपि न परमात्मतत्त्वज्ञानं तत्रापेक्ष्यते— अनुपयोगात्, अविकारविरोधाच्च ।

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

(२) एवं तर्हि विद्यासव्यपेक्षेभ्यः कर्मभ्यः स्यान्मोक्षः, विद्यासहितानां च कर्मणां भवेत्कार्यान्तरारम्भसामर्थ्यम् । यथा स्वतो मरणज्वरादिकार्यारम्भसामर्थ्यानामपि विषदध्यादीनां मन्त्रशर्करादिसंयुक्तानां कार्यान्तरारम्भसामर्थ्यम्, एवं विद्यासहितैः कर्मभिर्मोक्ष आरभ्यते—इति चेत्, न, आरभ्यस्यानित्यत्वादित्युक्तो दोषः । वचनादारभ्योऽपि नित्य एवेति चेत्, न, ज्ञापकत्वाद्वचनस्य । वचनं नाम यथाभूतस्यार्थस्य ज्ञापकं, नाविद्यमानस्य कर्तृ । न हि वचनशतेनापि नित्यमारभ्यते, आरब्धं चाऽविनाशि भवेत् ।

ज्ञानकर्मणोरङ्गाङ्गिभावेन समप्रधानतया च त्रिविधसमुच्चये ज्ञानं गुणभूतं, कर्म प्रधानमिति पक्षः

---

ण्यधिक्रियते, न ब्रह्मसाक्षात्कारफलमुपासनमपेक्षते,—व्यतिरेकभावादित्यर्थः । अध्ययनविधिव्यापारोपरमेऽनुष्ठेयं तथाभूतं ब्रह्मोपासनमेव नास्ति, मानाभावात्—इति न वक्तव्यमित्याह—उपासनं चेति । एतच्च कर्ममीमांसान्यायाङ्गीकारमात्रेणोक्तम् । वस्तुतश्च श्रोतव्योविधिप्रयुक्त एवोपनिषद्विचारारम्भो भिन्नाधिकारः । कर्मकाण्डविचारोऽप्युत्तरविधिप्रयुक्त एवेति प्रकटार्थे प्रतिष्ठितम् ।

केवलं कर्म मोक्षसाधनम्—इति पक्षं निरस्य, विद्यासमुच्चितं मोक्षसाधनम्—इति पक्षान्तरमाशङ्क्य निषेधति—एवं तर्हीत्यादिना । " न च पुनरावर्तते " इति वचनादारभ्योऽपि मोक्षो नित्यः—इति न शक्यं वक्तुम् । प्रसिद्धपदार्थयोग्यत्वमुपादाय वचनस्य संसर्गज्ञापकत्वात् । न चाऽऽरभ्यस्य नित्यत्वे योग्यत्वं प्रसिद्धम्, अन्यथा वचनस्य कारकत्वप्रसङ्गात्—" अन्धो मणिमविन्दत् " इत्यादिष्वपि योग्यताकल्पनप्रसङ्गादित्याह—न, ज्ञापकत्वादित्यादिना ।

---

( १ ) "यदेव विद्यया करोति"—छां. उ. १. १. १० इति वाक्याज्ज्ञानस्य नित्यनैमित्तिकादिकर्माङ्गत्वम् । "विविदिषन्ति यज्ञेन" बृ. उ. ४-४-२२ इति वाक्येन कर्मणो ज्ञानाङ्गत्वम् । " विद्यां चाविद्यां च यस्तद्वेदोभयं सह "—ई. उ. ११. इति वाक्येन ज्ञानकर्मणोः समप्रधानता । ( २ ) " आत्मयाथात्म्यानवबोधादेव हितप्रेप्सा दुःखजिहासा च भवति; न पुनः शास्त्रमेव—यूयं कर्तारो भोक्तारश्च, युष्माकं प्राप्यं परिहार्यं चास्ति, तस्माद्युष्माभिर्हितं प्रेप्सितव्यमहितं च जिहासितव्यं, यूयं वर्णाश्रमवयोवस्थाविशेषवन्तः—इति कर्तृत्वादिकमुत्पादयति बोधयति वा । किंतु स्वयमेवाध्यारोपितकर्तृत्वभोक्तृत्ववर्णाश्रमवयोवस्थाविशेषवतां पुंसां स्वत एव प्रेप्सितस्य हितस्य जिहासितस्य चाहितस्य प्राप्तये परिहाराय च साधनं जिज्ञासमानानामिदं साध्यमिदं च साधनमिति-साध्यसाधनसंबन्धमात्रं यथावस्थितमर्कवत् प्रकाशयति शास्त्रम्, न पुनः प्रवृत्तिनिवृत्तिजननेऽपि शास्त्रस्य व्यापारः । तत्र तूदासीनमित्यर्थः "—नै. सि. चन्द्रिका. १. २९.; ब्र.सू. १. १. २. " कर्तुमकर्तुमन्यथा वा कर्तुं शक्यं लौकिकं वैदिकं च कर्म,"—इत्यादि भाष्यं द्रष्टव्यम् ; तथा उप. साहस्रीगद्यप्रबन्धे ४२ वाक्यम् । ( ३ ) अनुष्ठेयतया भूतब्रह्मो०—पाठः । ( ४ ) अध्ययनविधेरर्थज्ञानपर्यवसायित्वात्—इति न्यायः । ( ५ ) ब्र. सू. १.१.४ भाष्यं समालोचनीयम् ; तुलय च संक्षेपशा. १.३१२, भामती १.१.२ तथाहि—'आश्रमविहितेत्यादि. ( ६ ) छां. उ. ८.१५.१ ( ७ ) तै. आ. १.११-५.

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

( ३ ) एतेन विद्याकर्मणोः संहतयोर्मोक्षारम्भकत्वं प्रत्युक्तम् । विद्याकर्मणी समसमुच्चयनिरासः मोक्षप्रतिबन्धहेतुनिवर्तके—इति चेत्, न, कर्मण फलान्तरदर्शनात् । उत्पत्तिसंस्कारविकाराप्तयो हि फलं कर्मणो दृश्यते, उत्पत्त्यादिफलविपरीतश्च मोक्षः ।

गतिश्रुतेराप्य इति चेत्—"सूर्यद्वारेण," "तयोर्ध्वमायन्" इत्येवमादिगतिश्रुतिभ्यः प्राप्यो मोक्षः, इति चेत्,—

न, सर्वगतत्वात्, गन्तृभिश्चानन्यत्वात्, आकाशादिकारणत्वात्सर्वगतं ब्रह्म; ब्रह्माव्यतिरिक्ताश्च सर्वे विज्ञानात्मानः; अतो नाऽऽप्यो मोक्षः । गन्तुरन्यद्भिन्नदेशं च भवति गन्तव्यम् । न हि येनैवाव्यतिरिक्तं यत्, तत्तेनैव गम्यते; तदनन्यत्वप्रसिद्धिश्च, "तत्सृष्ट्वा तदेवानुप्राविशत्", "क्षेत्रज्ञं चापि मां विद्धि" इत्येवमादिश्रुतिस्मृतिशतेभ्यः ।

गत्यैश्वर्यादिश्रुतिविरोध इति चेत्—अथापि स्यात्, यद्यप्राप्यो मोक्षः, तदा गतिश्रुतीनाम्, "स एकधा", "स यदि पितृलोककामो भवति", "स्त्रीभिर्वा यानैर्वा" इत्यादिश्रुतीनां च कोपः स्यादिति चेत्—

न, कार्यब्रह्मविषयत्वात्तासाम् । कार्ये हि ब्रह्मणि स्त्र्यादयः स्युः, न कारणे—"एकमेवाद्वितीयम्","यत्र नान्यत्पश्यति", "तत्केन कं पश्येत्" इत्यादिश्रुतिभ्यः।

---

कर्म प्रधानं, विद्या चोपसर्जनम्—इति समुच्चयं निरस्य समसमुच्चयेऽप्यतिदिशति—एतेनेति । अनित्यत्वादिदोषप्रसङ्गेनेत्यर्थः । मोक्षेति । मोक्षस्य प्रतिबन्धहेतुरविद्याऽधर्मादिः, तन्निवर्तके विद्याकर्मणी, न स्वरूपोत्पादके; ततः स्वरूपावस्थानस्य नित्यत्वम्, प्रध्वंसस्य च कृतकस्यापि नित्यत्वं प्रसिद्धमित्यर्थः । "भिद्यते हृदयग्रन्थिः" इत्यादिश्रुतेः केवलविद्यासाध्यैवाविद्यानिवृत्तिः, न तत्र विद्यायाः सहकार्यपेक्षा; कर्मफलं त्वन्यदेव प्रसिद्धमित्याह—न, कर्मण इति । 'उत्पत्तिः' पुरोडाशादेः, 'संस्कारो' व्रीह्यादेः, 'विकारः' सोमस्य, 'आप्तिः' वेदस्य—कर्मफलं प्रसिद्धम् । आत्मस्वरूपस्य तु मोक्षस्यानादित्वात्, अनाधेयातिशयत्वात्, अविकार्यत्वात्, नित्याप्तत्वाच्च कर्मफलाद्वैपरीत्यमित्यर्थः । गतिश्रुतेरिति । अर्चिरादिगतिश्रवणात्, ब्रह्माण्डाद्बहिःस्थितब्रह्मप्राप्तिर्मोक्षः, ततो नित्याप्तत्वमसिद्धमित्यर्थः । गत्या प्राप्तिः किं संयोगलक्षणा तादात्म्यलक्षणा वा ? नोभयथाऽपीत्याह—न, सर्वगतत्वादिति ।

गत्यादिश्रुतेस्तात्पर्यं शङ्कापूर्वकं दर्शयति—गत्यैश्वर्येत्यादिना । समुच्चयमभ्युपगम्य

---

( १ ) मु. उ. २-११—सूर्यद्वारेण ते विरजाः प्रयान्ति । ( २ ) छां. उ. ८. ६. ६, कठ. उ. २. ३. १६ ( ३ ) तै. उ. २. ६. ( ४ ) भ. गी. १३. २. ( ५ ) छां. उ. ७-२६-२ ( ६ ) छां. उ. ८ २-१ ( ७ ) छां. उ. ८-१२-३ ( ८ ) छां. उ. ६-२-१ ( ९ ) छां. उ. ७-२४-१ ( १० ) बृ. उ. ४-१५-१५. ( ११ ) मुं. उ. २-८. ( १२ ) तुल्य—संक्षेपशा. १.३०६. ( १३ ) °प्तिरपूर्वस्य—पाठः । ( १४ ) गत्वा—पाठः ।

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

विरोधाच्च विद्याकर्मणोः समुच्चयानुपपत्तिः। प्रविलीनकर्त्रादिकारकविशेषतत्त्वविषया हि विद्या तद्विपरीतकारकसाध्येन कर्मणा विरुध्यते। न ह्येकं वस्तु परमार्थतः कर्त्रादिविशेषवत्, तच्छून्यं च,—इत्युभयथा द्रष्टुं शक्यते। अवश्यं ह्यन्यतरन्मिथ्या स्यात्; अन्यतरस्य च मिथ्यात्वप्रसङ्गे, युक्तं यत्स्वाभाविकाज्ञानविषयस्य द्वैतस्य मिथ्यात्वम्,—"यत्र हि द्वैतमिव भवति", "मृत्योः स मृत्युमाप्नोति", "अथ यत्रान्यत्पश्यति… तदल्पम्", "अन्योऽसावन्योऽहमस्मि", "उदरमन्तरं कुरुते, अथ तस्य भयं भवति,"—इत्यादिश्रुतिशतेभ्यः। सत्यत्वं चैकत्वस्य "एकधैवानुद्रष्टव्यम्", "एकमेवाद्वितीयम्", "ब्रह्मैवेदं सर्वम्", "आत्मैवेदं सर्वम्,"—इत्यादिश्रुतिभ्यः। न च संप्रदानादिकारकभेदादर्शने कर्मोपपद्यते; अन्यत्वदर्शनापवादश्च विद्याविषये सहस्रशः श्रूयते; अतो विरोधो विद्याकर्मणोः; अतश्च समुच्चयानुपपत्तिः। तत्र—यदुक्तम्, संहताभ्यां विद्याकर्मभ्यां मोक्ष इति, अनुपपन्नं तत्।

*विद्याकर्मसमुच्चयानुपपत्तिः*

विहितत्वात्कर्मणाम्, श्रुतिविरोध इति चेत्—यद्युपमृद्य कर्त्रादिकारकविशेषमात्मैकत्वविज्ञानं विधीयते, सर्पादिभ्रान्तिविज्ञानोपमर्दकरज्ज्वादिविषयविज्ञानवत्, प्राप्तः कर्मविधिश्रुतीनां निर्विषयत्वाद्विरोधः, विहितानि च कर्माणि; स च विरोधो न युक्तः—प्रमाणत्वाच्छ्रुतीनामिति चेत्—

न, पुरुषार्थोपदेशपरत्वाच्छ्रुतीनाम्। विद्योपदेशपरा तावच्छ्रुतिः, संसारात्पुरुषो मोक्षयितव्य इति संसारहेतोरविद्याया विद्यया निवृत्तिः कर्तव्या—इति विद्याप्रकाशकत्वेन प्रवृत्ता, इति न विरोधः।

---

कर्मकार्यं किंचिन्मोक्षे न संभवतीत्युक्तम्, सोऽपि न संभवतीत्याह—विरोधाच्चेत्यादिना।

संग्रहवाक्यं विवृणोति—विद्योपदेशपरा तावदित्यादिना।

यदि कर्त्रादिकारकभेदस्य सत्यत्वांशमपबाध्य ब्रह्मज्ञानमुपदिश्यते, तदा मिथ्यार्थत्वात्कर्मविधीनामप्रामाण्यं स्यादित्याह—विहितत्वादिति। शङ्कां विवृणोति—यदीत्यादिना।

अध्ययनविधिगृहीतानां श्रुतीनां पुरुषार्थोपदर्शकत्वेन प्रामाण्यं वक्तव्यम्, न तु भेदसत्यत्वेन। ततः प्रसिद्धिसिद्धं कारकादिभेदमर्थक्रियासमर्थमादाय प्रवृत्तानां प्रामाण्यं न विरुध्यत इत्याह—न, पुरुषार्थेति।

---

(१) बृ. उ. ४-१५.१५. (२) कठ. उ. २-१० (३) छां. उ. ७-२४-१ (४) बृ. उ. १-४-१० (५) तै. उ. २-७ (६) बृ. उ. ४-४-२० (७) छां. उ. ६-२-१ (८) नृ. उ. ता. उ. ७ (९) छां. उ. ७-२५-२.

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

एवमपि कर्त्रादिकारकसद्भावप्रतिपादनपरं शास्त्रं विरुध्यत एवेति चेत्—

न, यथाप्राप्तमेव कारकास्तित्वमुपादाय, उपात्तदुरितक्षयार्थं कर्माणि विदधच्छास्त्रं मुमुक्षूणां, फलार्थिनां च फलसाधनं, न कारकास्तित्वे व्याप्रियते। उपचितदुरितप्रतिबन्धस्य हि विद्योत्पत्तिर्नावकल्पते। तत्क्षये च विद्योत्पत्तिः स्यात्, ततश्चाविद्यानिवृत्तिः, तत आत्यन्तिकः संसारोपरमः।

अपि चानात्मदर्शिनो ह्यनात्मविषयः कामः। कामयमानश्च करोति कर्माणि। तत्फलोपभोगाय शरीराद्युपादानलक्षणः संसारः। तद्व्यतिरेकेणाऽऽत्मैकत्वदर्शिनो विषयाभावात्कामानुत्पत्तिः, आत्मनि चानन्यत्वात्कामानुत्पत्तौ स्वात्मन्यवस्थानं मोक्षः—इत्यतोऽपि विद्याकर्मणोर्विरोधः।

ज्ञानं प्रधानं, कर्म गुणभूतमित्येतत्पक्षनिरासः

(४) विरोधादेव च विद्या मोक्षं प्रति न कर्माण्यपेक्षते। स्वात्मलाभे तु पूर्वोपचितप्रतिबन्धापनयद्वारेण विद्याहेतुत्वं प्रतिपद्यन्ते कर्माणि नित्यानि,—इत्यत एवास्मिन्प्रकरण उपन्यस्तानि कर्माणीत्यवोचाम। एवं चाविरोधः कर्मविधिश्रुतीनाम्।

"ज्ञानादेव तु कैवल्यम्"—इति सिद्धान्तः

(५) अतः केवलाया एव विद्यायाः परं श्रेय इति सिद्धम्।

एवं तर्ह्याश्रमान्तरानुपपत्तिः; कर्मनिमित्तत्वाद्विद्योत्पत्तेः, गार्हस्थ्ये च विहितानि कर्माणि—इत्यैकाश्रम्यमेव, अतश्च यावज्जीवादिश्रुतयोऽनुकूलतराः स्युः।

सर्वाण्येवाश्रमकर्माणि विद्योत्पत्तावपेक्षितानि

न, कर्मानेकत्वात्—न ह्यग्निहोत्रादीन्येव कर्माणि। ब्रह्मचर्यम्, तपः, सत्यवदनम्, शमः, दमः, अहिंसा—इत्येवमादीन्यपि कर्माणीतराश्रमप्रसिद्धानि विद्योत्पत्तौ साधकतमान्यसंकीर्णत्वाद्विद्यन्ते, ध्यानधारणादिलक्षणानि च; वक्ष्यति च—"तपसा ब्रह्म विजिज्ञासस्व" इति।[1]

---

पूर्वं सत्यमिथ्याविषयत्वेन विद्याकर्मणोर्विरोधमादाय समुच्चयो निरस्तः, इदानीं काम्यकामिविषयत्वेन विरोधमाह—अपि चेत्यादिना।

समसमुच्चयं निरस्य गुणप्रधानभावेनापि समुच्चयं निरस्यति—विरोधादेव चेति। विद्या चेत्कर्माणि स्वफले नापेक्षते विरुद्धत्वात्, त्रिदण्डीधर्म इवर्तुगमनं, कथं तर्हि विद्यासंनिधाने कर्मणां पाठः?—इत्यत आह—स्वात्मलाभे त्विति।

कर्मणां विद्यासाधनत्वं श्रुत्वा गार्हस्थ्यमेवैकमनुष्ठेयम्—इति प्रत्यवतिष्ठन्ते कर्मजडाः—एवं तर्हीति—श्रुतिस्मृतिष्वाश्रमान्तराणामपि विहितत्वाविशेषात्, तदीयकर्मसु कर्मत्वाविशेषाच्च। ग्राम्यधर्मरागिणामेवैतच्चोद्यमित्याह—न, कर्मानेकत्वादिति। असंकीर्ण-

---

(१) तै. उ. ३. २.

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

जन्मान्तरकृतकर्मभ्यश्च प्रागपि गार्हस्थ्याद्विद्योत्पत्तिसंभवात्, कर्मार्थत्वाच्च गार्हस्थ्यप्रतिपत्तेः, कर्मसाध्यायां च विद्यायां सत्याम्, गार्हस्थ्यप्रतिपत्तिरनर्थिकैव। लोकार्थत्वाच्च पुत्रादीनाम्, पुत्रादिसाध्येभ्यश्च—अयं लोकः, पितृलोकः, देवलोक इत्येतेभ्यः—व्यावृत्तकामस्य, नित्यसिद्धात्मलोकदर्शिनः कर्मणि प्रयोजनमपश्यतः, कथं प्रवृत्तिरुपपद्यते? प्रतिपन्नगार्हस्थ्यस्यापि विद्योत्पत्तौ विद्यापरिपाकाद्विरक्तस्य, कर्मसु प्रयोजनमपश्यतः, कर्मभ्यो निवृत्तिरेव स्यात्—"प्रव्रजिष्यन्वा अरेऽहमस्मात्स्थानादस्मि" इत्येवमादिश्रुतिलिङ्गदर्शनात्।

कर्म प्रति श्रुतेर्यत्नाधिक्यदर्शनादयुक्तम्—इति चेत्—अग्निहोत्रादिकर्म प्रति श्रुतेरधिको यत्नः, महांश्च कर्मण्यायासः, अनेकसाधनसाध्यत्वादग्निहोत्रादीनाम्, तपोब्रह्मचर्यादीनां चेतराश्रमकर्मणां गार्हस्थ्येऽपि समानत्वात्, अल्पसाधनापेक्षत्वाच्चेतरेषाम्, न युक्तस्तुल्यवद्विकल्प आश्रमिभिस्तस्य, इति चेत्—न, जन्मान्तरकृतानुग्रहात्। यदुक्तं 'कर्मणि श्रुतेरधिको यत्नः' इत्यादि, नासौ दोषः। यतो जन्मान्तरकृतमप्यग्निहोत्रादिलक्षणं कर्म, ब्रह्मचर्यादिलक्षणं च, अनुग्राहकं भवति विद्योत्पत्तिं प्रति, येन जन्मनैव विरक्ता दृश्यन्ते केचित्, केचित्तु कर्मसु प्रवृत्ता अविरक्ता विद्याविद्वेषिणः, तस्माज्जन्मान्तरकृतसंस्कारेभ्यो विरक्तानामाश्रमान्तरप्रतिपत्तिरेवेष्यते।

कर्मफलबाहुल्याच्च—पुत्रस्वर्गब्रह्मवर्चसादिलक्षणस्य कर्मफलस्यासंख्येयत्वात्, तत्प्रति च पुरुषाणां कामबाहुल्यात्, तदर्थः श्रुतेरधिको यत्नः कर्मसूपपद्यते: आशिषां बाहुल्यदर्शनात्—इदं मे स्यादिदं मे स्यादिति; उपायत्वाच्च—उपायभूतानि हि कर्माणि विद्यां प्रतीत्यवोचाम। उपाये चाधिको यत्नः कर्तव्यो नोपेये।

कर्मनिमित्तत्वाद्विद्याया यत्नान्तरानर्थक्यमिति चेत्—कर्मभ्य एव पूर्वोप-

---

त्वादिति। हिंसाद्यमिश्रितत्वादित्यर्थः। इतश्च कर्मणो विद्यासाधनत्वेऽपि न गार्हस्थ्यमावश्यकम्, इत्याह—जन्मान्तरेति। कामिनां गार्हस्थ्यस्यानुष्ठेयत्वेऽपि, न सर्वैरनुष्ठेयत्वम्, इत्यत्र हेत्वन्तरमाह—लोकार्थत्वाच्चेत्यादिना।

गार्हस्थ्यस्यानावश्यकत्वेन वैकल्पिकमनुष्ठानमुक्तम्, तत्रातुल्यबलत्वेन विकल्पमाक्षिपति—कर्म प्रति श्रुतेरिति। "न जन्मान्तरकृतानुग्रहात्'—इति परिहारभाष्यं विवृणोति—यदुक्तमित्यादिना। कर्मणि यत्नाधिक्यस्यान्यथासिद्धत्वाद्विकल्पविघातकत्वं न संभवतीत्यर्थः।

इदानीं गृहस्थाश्रमकर्मणां बहिरङ्गत्वम्, संन्यासाश्रमकर्मणां त्वन्तरङ्गविद्यासाधनत्वम्,

---

(१) बृ. उ. १. ५. १६. (२) बृ. उ. ४. ५. २.

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

## अथ शिक्षावल्ल्यां द्वादशोऽनुवाकः ।

( शान्तिः—उपकारपरामर्शमन्त्रः )

**शं नो॑ मि॒त्रः शं वरु॑णः । शं नो॑ भवत्वर्य॒मा । शं न॒ इन्द्रो॒ बृह॒स्पतिः॑ । शं नो॒ विष्णु॑रुरुक्र॒मः । नमो॒ ब्रह्म॑णे । नम॑स्ते वायो । त्वमे॒व प्र॒त्यक्षं॒ ब्रह्मा॑सि । त्वामे॒व प्र॒त्यक्षं॒ ब्रह्मावा॑दिषम् । ऋ॒तम॑वादिषम् । स॒त्यम॑वादिषम् । तन्मामा॑वीत् । त॒द्वक्तार॑मावीत् । आवी॒न्माम् । आवी॒द्वक्तार॑म् । ॐ शान्ति॒ः शान्ति॒ः शान्तिः॑ ( १ )**

चितदुरितप्रतिबन्धक्षयादेव विद्योत्पद्यते चेत्—कर्मभ्यः पृथगुपनिषच्छ्रवणादियत्नोऽनर्थक इति चेत्—

न, नियमाभावात्; नहि प्रतिबन्धक्षयादेव विद्योत्पद्यते, न त्वीश्वरप्रसादतपोध्यानाद्यनुष्ठानात्—इति नियमोऽस्ति ;—अहिंसाब्रह्मचर्यादीनां च विद्यां प्रत्युपकारकत्वात्, साक्षादेव च कारणत्वाच्छ्रवणमननिदिध्यासनानाम् । अतः सिद्धान्याश्रमान्तराणि । सर्वेषां चाधिकारो विद्यायाम्, परं च श्रेयः केवलाया विद्याया एवेति सिद्धम्*।

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवतः कृतौ तैत्तिरीयोपनिषच्छिक्षावल्लीभाष्ये एकादशोऽनुवाकः ॥ ११ ॥

---

'शं नो मित्रः' इत्याद्यतीतविद्याप्राप्त्युपसर्गप्रशमनार्था शान्तिः पठिता । इदानीं तु वक्ष्यमाणब्रह्मविद्याप्राप्त्युपसर्गोपशमनार्था शान्तिः इति विशेषं दर्शयितुं चोद्यमुद्भावयति—कर्मनिमित्तत्वादित्यादिना ॥

शान्तिः

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दज्ञानविरचिते तैत्तिरीयोपनिषच्छांकरभाष्यटिप्पणे शिक्षावल्ल्यामेकादशोऽनुवाकः ॥ ११ ॥

---

शं नो मित्र इति । तदपरं ब्रह्म मामपरविद्यार्थिनमावीदरक्षदित्यर्थः ।

शान्तिद्वयस्यापौनरुक्त्यमाह—शं नो मित्र इति । इदानीं परविद्यार्थिनमप्यवतु, साधा-

---

* विद्याफले मोक्षे कर्मनैरपेक्ष्यम्, विद्यायाः स्वोत्पत्तौ कर्मापेक्षा, विद्याहेतुभिरेवाश्रमसिद्धिः, अनाश्रमिकर्मणामपि विद्याहेतुत्वं च ब्र. सू. ३.४.२५,२६, ३२, ३६—इत्यत्र चिन्तितानि । 'बालप्रियेण मृदुवादकथापथेन' नयोक्त्या चास्यार्थजातस्य प्रसाधनं शंकरदिग्विजये श्रीमदाचार्यमण्डनमिश्रसंवादाख्ये सर्गे द्रष्टव्यं रसिकैः ।

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

( निर्गुणविद्याविघ्नशान्तिः )

सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्विना-वधीतमस्तु मा विद्विषावहै । ॐ शान्तिः शान्तिः शान्तिः ।

सत्यमेवादिषं पश्चं च ॥

शं नः शीक्षां सह नौ यश्छन्दसां भूः स यः पृथिव्योमित्यृतं चाहं वेदमनूच्य शं नो द्वादश ॥ शं नो मह इत्यादित्यो नो इतराणि त्रयो-विंशतिः ॥

॥ इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि द्वादशोऽनुवाकः ॥ १२ ॥

शिक्षावल्ली समाप्ता* ॥

पठ्यते—'शं नो मित्रः' इति, 'सह नाववतु' इति च । 'शं नो मित्रः' इत्यादि पूर्ववत्स्पष्टम् । सह नाववतु—नौ शिष्याचार्यौ सह एव अवतु रक्षतु । सह नौ भुनक्तु भोजयतु । सह वीर्यं विद्यादिनिमित्तं सामर्थ्यं करवावहै निर्वर्तयावहै । तेजस्विनौ तेजस्विनोरावयोरधीतं स्वधीतं अस्तु—अर्थ-ज्ञानयोग्यमस्त्वित्यर्थः । यद्वा नावावयोरधीतं तेजस्व्योजोवदस्त्वित्यर्थः । मा विद्विषावहै विद्याग्रहणनिमित्तं शिष्यस्य, आचार्यस्य वा, प्रमादकृतादन्यायाद्विद्वेषः प्राप्तः, तच्छमनायेयमाशीः 'मा विद्विषावहै' इति—मैवेतरेतरं विद्वेषमापद्यावहै । 'शान्तिः'—इति त्रिर्वचनमुक्तार्थम् । वक्ष्यमाणविद्याविघ्नप्रशमनार्थेयं शान्तिः—अविघ्नेन स्वात्मविद्याप्राप्तिराशास्यते, तन्मूलं हि परं श्रेय इति ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवतः कृतौ तैत्तिरीयोपनिषच्छिक्षावल्लीभाष्ये द्वादशोऽनुवाकः ॥ १२ ॥

---

रण्येन मया पूर्वं प्रार्थितत्वादित्यर्थः । असाधारण्येन परविघ्नोपसर्गशान्त्यर्थमाह—सह नाविति । नावावयोस्तेजस्विनोरधीतं तेजस्व्यस्त्विति योजना ।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दज्ञानविरचिते तैत्तिरीयोपनिषच्छांकरभाष्यटिप्पणे शिक्षावल्ल्यां द्वादशोऽनुवाकः ॥ १२ ॥

---

(१) अत्र शिक्षावल्ल्यवसान इयं शान्तिद्वययोजना वार्तिकतट्टीकाभिप्रायेण कृता । एवमेव भाष्यपाठः संगच्छते, नान्यथा । (२) इदं शमित्यारभ्य द्वादशेत्यन्तं वल्लीगतानुवाकानामाद्यप्रतीकप्रदर्शनेनानुवाकगणनम् । (३) इदमनुवाकगतवाक्यशतकाद्यप्रतीकप्रदर्शनेन वाक्यगणनम् । तुलय–पृ. ७ टिप्पण्यौ १,२. (४) ज्ञानसंयोग्यस्त्वित्यर्थः–इति पाठान्तरम् । यद्वा नावावयोरधीतं तेजस्व्योजोवदस्त्वित्यर्थः—इति पाठः केषुचित्पुस्तकेषु नोपलभ्यते । (५) 'तेजस्विनोः'–'योजना' पदद्वयरहितोऽपि पाठो दृश्यते कुत्रचित् । (२)–°न्दाभिव्यक्तिरूपाऽवि°—इति पाठः । * तैत्तिरीयारण्यकक्रमेण सप्तमप्रपाठकस्य समाप्तिरत्र ।

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

# अथ ब्रह्म-आनन्द-वल्ली*

## ( ब्रह्मविद्याप्रकाशः )

## प्रथमोऽनुवाकः

### ( ब्रह्मसूत्रम् )

### ॐ ब्रह्मविदाप्नोति परम् ।

संहितादिविषयाणि, कर्मभिरविरुद्धानि, उपासनान्युक्तानि; अनन्तरं चान्तः-

ब्रह्मविद्या विषयः

सोपाधिकात्मदर्शनमुक्तं व्याहृतिद्वारेण स्वाराज्यफलम् । न चैतावताऽशेषतः संसारबीजस्योपमर्दनमस्ति, इत्यतोऽशेषोपद्रवबीजस्याज्ञानस्य निवृत्त्यर्थम्—विधूतसर्वोपाधिविशेषात्मदर्शनार्थम्—इदमारभ्यते 'ब्रह्मविदाप्नोति परम्' इत्यादि ।

प्रयोजनं चास्या ब्रह्मविद्याया अविद्यानिवृत्तिः, ततश्चात्यन्तिकः संसाराभावः।

अविद्यानिवृत्तिः प्रयोजनम्

वक्ष्यति च—"विद्वान्न बिभेति कुतश्चन" इति; संसारनिमित्ते च सति, 'अभयं प्रतिष्ठां विन्दते' इत्यनुपपन्नम्; "कृताकृते पुण्यपापे न तपतः" इति च । अतोऽवगम्यते—अस्माद्विज्ञानात्सर्वात्मब्रह्मवि-

वृत्तानुवादपूर्वकमानन्दवल्ल्यास्तात्पर्यमाह—संहितादीत्यादिना । ननु यथा पूर्वं "आप्नोति स्वाराज्यम्" इत्यपरविद्याफलमुक्तं संसारगोचरमेव, तथा परविद्याफलमपि "सोऽश्नुते सर्वान्कामान्" इति सर्वविषयसाध्यानानन्दान्संसारगोचरानेव दर्शयिष्यति, कथमात्यन्तिकः संसाराभावः? इत्यत आह—प्रयोजनं चास्या इति । सर्वकामशब्देन

---

* "सेयं तैत्तिरीयोपनिषत्त्रिविधा—सांहिती, वारुणी, याज्ञिकी चेति । तत्र प्रथम-प्रपाठके संहिताध्यायस्योक्तत्वात्तद्रूपोपनिषत् सांहिती; द्वितीयतृतीययोः प्रपाठकयोर्या ब्रह्मविद्याऽभिहिता, तस्याः संप्रदायप्रवर्तको वरुणः, तस्मात्तदुभयरूपोपनिषद्वारुणी। चतुर्थप्रपाठके यज्ञोपयुक्ता अपि मन्त्रास्तत्र तत्राम्नाताः, अतस्तद्रूपोपनिषद्याज्ञिकी ( महानारायणोपनिषत् ) । तासां तिसृणां मध्ये वारुणी मुख्या;—तस्यां परमपुरुषार्थस्य ब्रह्मप्राप्तिलक्षणस्य साक्षादेव साधनभूताया ब्रह्मविद्यायाः प्रतिपादितत्वात" । "या तु देशविशेषे 'ब्रह्मवित्'—इत्यारभ्य नवानुवाका इति प्रसिद्धिः, सा त्वध्यापकैः पाठसौकर्याय परिकल्पिता, न त्वर्थानुसारिणी । ते हि 'तदप्येष श्लोको भवति'—इत्यस्याः प्रतिज्ञायाः श्लोकपाठस्य च मध्ये तं तमनुवाकं समापयन्ति। न चैतद्युक्तम्—कस्यचिदप्यर्थस्य पर्यवसानाभावात् । तस्मादितरदेशगताध्यापकप्रसिद्ध्या कृत्स्नोऽप्ययमेक एवानुवाकः। …येषां नवानुवाककल्पना, तेषामप्येकवल्लीत्वप्रसिद्धिरस्ति, 'ब्रह्मवल्ली'—इत्येवं तैर्व्याहृतत्वात । भगवद्भिर्भाष्यकारैरपि 'आनन्दवल्ली'—इत्येवं व्याहृतम् । अतो बहुस्कन्धयुक्तवल्लीवद्बहुविधावान्तरपाठभेदयुक्तोऽप्येक एवायमनुवाकः"—इति श्रीसायणाचार्यभाष्ये.

(१) तै. उ. २. ९ (२) तै. उ. २.७ ३) तै. उ. २. ९ (४) पृ. २१. (५) तै.उ. २.१.

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

पयादात्यन्तिकः संसाराभाव इति । स्वयमेव च प्रयोजनमाह—'ब्रह्मविदाप्नोति परम्' इति—आदावेव संबन्धप्रयोजनज्ञापनार्थम् । निर्ज्ञातयोर्हि संबन्धप्रयोजनयोः, विद्याश्रवणग्रहणधारणाभ्यासार्थं प्रवर्तते । श्रवणादिपूर्वकं हि विद्याफलम्, "श्रोतव्यः, मन्तव्यः,"–इत्यादिश्रुत्यन्तरेभ्यः । ब्रह्मविद्—'ब्रह्म' इति वक्ष्यमाणलक्षणम्, वृद्धतमत्वाद्ब्रह्म, तद्वेत्ति विजानातीति 'ब्रह्मविद्'—आप्नोति प्राप्नोति परं निरतिशयम् ; तदेव ब्रह्म परम्—न ह्यन्यस्य विज्ञानादन्यस्य प्राप्तिः, स्पष्टं च श्रुत्यन्तरं ब्रह्मप्राप्तिमेव ब्रह्मविदो दर्शयति "स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति" इत्यादि ।

ननु सर्वगतं सर्वस्याऽऽत्मभूतं ब्रह्म वक्ष्यति, अतो नाऽऽप्यम्—आप्तिश्चान्यस्यान्येन, परिच्छिन्नस्य च परिच्छिन्नेन दृष्टा; अपरिच्छिन्नं सर्वात्मकं च ब्रह्म, इत्यतः परिच्छिन्नवदनात्मवच्च तस्याऽऽप्तिरनुपपन्ना ।

नायं दोषः । कथम्?—दर्शनादर्शनापेक्षत्वाद्ब्रह्मण आप्त्यनाप्त्योः । परमार्थतो ब्रह्मस्वरूपस्यापि सतोऽस्य जीवस्य, भूतमात्राकृतबाह्यपरिच्छिन्नान्नमयाद्यात्मदर्शिनः, तदासक्तचेतसः—प्रकृतसंख्यापूरणस्याऽऽत्मनोऽव्यवहितस्यापि बाह्यसंख्येयविषयासक्तचित्ततया स्वरूपाभावदर्शनवत्—परमार्थब्रह्मस्वरूपाभावदर्शनलक्षणयाऽविद्यया, अन्नमयादीन्बाह्याननात्मन आत्मत्वेन प्रतिपन्नत्वात्, अन्न-

आप्तेरौपचारिकत्वम्—ब्रह्मप्राप्तिर्नाम स्वरूपाभिव्यक्तिः

निरतिशयानन्दाभिव्यक्तिर्विवक्षिता, सा च स्वभावानन्दानभिव्यक्तिरूपाविद्यानिवृत्तिरेवेति न संसारगोचरं फलमित्यर्थः । आद्यवाक्यस्यावान्तरतात्पर्यमाह—स्वयमेव चेति । विद्यैव केवलया मोक्षः साधयितुं शक्यते । ब्रह्मविदिति विशेषणात्संबन्धज्ञापनस्य, पुरुषाकाङ्क्षाविषयतया परप्राप्तिः प्रयोजनं विद्याया इति ज्ञापनस्य वा, कुत्रोपयोगः?–इत्याशङ्क्य यज्ञादिपरित्यागेन वेदान्तश्रवणादावेव मुमुक्षुणा प्रवर्तितव्यं–इत्याह—निर्ज्ञातयोर्हीति । परशब्देनोत्कृष्टमुच्यते, कथं 'ब्रह्म' इति व्याख्यायते ? तत्राऽऽह—न हीति ।

'आप्नोति' शब्दस्यौपचारिकमर्थं दर्शयितुं शङ्कामुखेन मुख्यार्थे बाधकमाह—ननु सर्वगतमित्यादिना ।

'परमार्थतो ब्रह्मस्वरूपस्यापि सतो जीवस्य''' अविद्यया''' ब्रह्मानाप्तं स्यात्' इति

(१) बृ. उ. २. ४.५. (२) "बृहबृहि वृद्धौ"–(धा. पा. १. ७३६–७) इति धातुर्वृद्धिमाचष्टे । सा चात्र प्रतियोगिविशेषानुपादानान्निरतिशयैव विवक्षिता । सति च वस्त्वन्तरे तेन परिच्छेदाद्वृद्धेर्निरतिशयत्वं भज्येत, तथाच वस्त्वन्तरकृतपरिच्छेदरहितमेव ब्रह्मशब्दवाच्यं भवितुमर्हति । बृहत्तमत्वात्–पाठान्तरम् । (३) मुं. उ. ३.२.९. (४) ब्रह्मविद्विद्वान् परं ब्रह्म प्राप्नोतीत्ययं संबन्धो न सिध्यति, यदि ब्रह्मज्ञानं ब्रह्मप्राप्तिसाधनं न स्यात्, तस्माच्छ्रुत्यर्थानुपपत्त्या साधनत्वसिद्धिरित्यर्थः । (५) °ज्ञानस्य–पाठः । (६) ज्ञानस्य–पाठः । (७) °मित्यत्रेत्याह–पाठः ।

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

( अनुव्याख्यानम् )

तदेषाऽभ्युक्ता । सत्यं ज्ञानमनन्तं ब्रह्म ।

मयाद्यनात्मभ्यो नान्योऽहमस्मीत्यभिमन्यते; एवमविद्ययाऽऽत्मभूतमपि ब्रह्मानाप्तं स्यात् । तस्यैवमविद्ययाऽनाप्तब्रह्मस्वरूपस्य—प्रकृतसंख्यापूरणस्य, आत्मनोऽविद्ययाऽनाप्तस्य सतः, केनचित्स्मारितस्य पुनः स्वस्यैव विद्ययाऽऽप्तिर्यथा—तथा श्रुत्युपदिष्टस्य सर्वात्मब्रह्मण आत्मत्वदर्शनेन विद्यया तदाप्तिरुपपद्यत एव ॥

'ब्रह्मविदाप्नोति परम्' इति वाक्यं सूत्रभूतं सर्वस्य वल्ल्यर्थस्य।(१)'ब्रह्मविदाप्नोति परम्' इत्यनेन वाक्येन वेद्यतया सूत्रितस्य ब्रह्मणोऽनिर्धारितस्वरूपविशेषस्य सर्वतो व्यावृत्तस्वरूपविशेषसमर्पणसमर्थस्य लक्षणस्याभिधानेन स्वरूपनिर्धारणाय—(२) अविशेषेण चोक्तवेदनस्य ब्रह्मणो वक्ष्यमाणलक्षणस्य विशेषेण प्रत्यगात्मतयाऽनन्यरूपेण विज्ञेयत्वाय—(३) ब्रह्मविद्याफलं च ब्रह्मविदो यत्परप्राप्तिलक्षणमुक्तम्, स सर्वात्मभावः सर्वसंसारधर्मातीतब्रह्मस्वरूपत्वमेव, नान्यत्, इत्येतत्प्रदर्शनाय—एषर्गुदाह्रियते—

ऋक्तात्पर्यम्

तदेषाऽभ्युक्तेति—'तत्' तस्मिन्नेव ब्राह्मणवाक्योक्तेऽर्थे 'एषा' ऋगभ्युक्ताऽऽम्नाता ।

---

संबन्धः । भूतमात्राभिः—भूतांशैः कृता ये बाह्याः परिच्छिन्नाश्चान्नमयादयः, तदात्मदर्शिनं इत्यविद्याया विक्षेपकत्वरूपमुक्तम्; परमार्थं ब्रह्मस्वरूपं नास्तीत्यभावदर्शनमावरणलक्षणं लिङ्गं यस्याः सा तथोक्ता । स्वरूपेऽप्यग्रहणविपर्ययौ भवत इत्यत्र दृष्टान्तमाह—प्रकृतेति । प्रकृतसंख्यापूरणस्य दशमस्य नवैव वयं वर्तामह इति विपर्ययः, स्वरूपादर्शनं च यथेत्यर्थः । अदर्शननिमित्तामनाप्तिं विविच्य, दर्शननिमित्तामाप्तिं विवृणोति—तस्यैवमिति ॥

आद्यं ब्राह्मणवाक्यं व्याख्याय, उत्तरं मन्त्रं संक्षेपतोऽर्थकथनेनावतारयति—ब्रह्मविदाप्नोती-

---

( १ ) °त्मं–पा°ः । ( २ ) °मत्व°–पाठः ।

श्रीविद्यारण्यमुनिकृते अनुभूतिप्रकाशे तैत्तिरीयकविद्याप्रकाशः

ब्रह्मवल्ल्यां ब्रह्मविद्यां तित्तिरिः प्राह यामिमाम् । वक्ष्ये सुखाववोधाय क्रीडंस्तत्र मुमुक्षवः ॥ १ ॥
दर्शादापतृमेधान्तैः कर्मभिर्बहुजन्मसु । अनुष्ठितैर्विविदिषा जायतेऽन्तिमजन्मनि ॥ २ ॥
ततो योगं समभ्यस्य संहितोपासनादिभिः । एकाग्रे साधितेऽथास्य विद्यां सूत्रयति श्रुतिः ॥ ३ ॥
सूत्रात्पूर्वं शान्तिमन्त्रो जपायात्रोपवर्णितः । जपेन विघ्ना द्वेषाद्याः शाम्यन्ति मनसि स्थिताः ॥ ४ ॥
ब्रह्मवित् परमेतीति सूत्रं सर्वार्थसूचनात् । ज्ञेयं ज्ञानं फलं चेति सर्वेऽर्थाः सूचिता इह ॥ ५ ॥
ज्ञेयं ब्रह्म तदीया धीर्ज्ञानं स्याद्ब्रह्मता फलम् । सूत्रव्याख्यानरूपायामृच्येतद्विशदीकृतम् ॥ ६ ॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

'सत्यं ज्ञानमनन्तं ब्रह्म'—इति ब्रह्मणो लक्षणार्थं वाक्यम् । सत्यादीनि हि त्रीणि विशेषणार्थानि पदानि विशेष्यस्य ब्रह्मणः; विशेष्यं ब्रह्म, विवक्षितत्वाद्वेद्यतया; विशेषणविशेष्यत्वादेव सत्यादीन्येकविभक्त्यन्तानि पदानि समानाधिकरणानि; सत्यादिभिस्त्रिभिर्विशेषणैर्विशेष्यमाणं ब्रह्म विशेष्यान्तरेभ्यो निर्धार्यते । एवं हि तज्ज्ञातं भवति, यदन्येभ्यो निर्धारितम्—यथा लोके नीलं महत्सुगन्ध्युत्पलमिति ।

ब्रह्मस्वरूपलक्षणम्

ननु—विशेष्यं विशेषणान्तरं व्यभिचरद्विशेष्यते,—यथा नीलं रक्तं चोत्पलमिति,—यदा ह्यनेकानि द्रव्याण्येकजातीयान्यनेकविशेषणयोगीनि, तदा विशेषणस्यार्थवत्त्वम्, न ह्येकस्मिन्नेव वस्तुनि, विशेषणान्तरायो-

लक्षणस्य लक्षणम्

---

त्यादिना । सर्वतो व्यावृत्तो यः स्वरूपविशेषः, तत्समर्पणे समर्थस्य लक्षणस्याभिधानेन स्वरूपनिर्धारणाय...एवमुदाहियत इति संबन्धः । बृहत्वाद्ब्रह्मेति व्युत्पत्तिबलेनास्ति किमपि महद्वस्त्वित्यविशेषेण प्रतीयते; ततो लक्ष्योद्देशेन लक्षणविधानमिति प्रसिद्धिरुपपद्यते । अव्याकृतादिब्रह्मशब्दवाच्यतया सजातीयम्, घटादि विजातीयम्; तस्मात्सजातीयविजातीयव्यावर्तकतया सत्यादिलक्षणस्य लक्षणत्वप्रसिद्धिरुपपद्यते । लक्षणाभिधानद्वारेण स्वरूपविशेषप्रतिपादने तात्पर्यम्, इति वाक्यस्य व्यर्थतादोषः परिहृतः । पूर्वत्र ब्रह्मविदित्यनेनाविशेषेणोक्तं वेदनं यस्य ब्रह्मणः, तस्य 'यो वेद निहितं गुहायाम्' इत्यनेन प्रत्यगात्मतया वेदनं वक्तव्यमित्येवमर्था चर्गुदाहियत इत्याह—अविशेषेण चेति ।

आपातप्रतिपन्नं विशेषणविशेष्यभावमादाय पदानि विभजते—सत्यादीनि हि त्रीणीति । विशेषणार्थानीति—व्यावृत्त्यर्थानि । कुतो विशेषणविशेष्यभावप्रतीतिः? इत्यत आह—विशेषणविशेष्यत्वादेवेति । 'नीलं महत्सुगन्ध्युत्पलम्' इत्यादौ सत्येव विशेषणविशेष्यभावे समानाधिकरणतयैकविभक्त्यन्तानि प्रसिद्धानि, एतान्यपि च तथाभूतानि— नानार्थगतविशेषणविशेष्यभावनिबन्धनानीति गम्यत इत्यर्थः । विशेषणविशेष्यभावस्य फलमाह—एवं हीति ।

विशेषणविशेष्यभावमाक्षिपति—नन्विति । नीलत्वं व्यभिचरदुत्पलं रक्तमपि संभवति,

---

(१) तुल्य—सामान्यलक्षणं त्यक्त्वा विशेषस्यैव लक्षणं । न शक्यं केवलं वक्तुमितोऽप्यस्य न वाच्यता॥ श्लो. वा. शब्दपरिच्छेदे २ श्लोकः (२) कर्तव्यम्—पाठः । (३) ब्रह्मणो विशेषाः सत्यादयः, तैर्यदा ब्रह्म विशेषितम्, तदा सत्यादिविरुद्धेभ्योऽसत्यजाड्यपरिच्छिन्नेभ्यो निराकृतं ब्रह्म सिध्यति । यथा नीलमुत्पलम्, रक्तमुत्पलम्—इत्यादिप्रयोगे व्यक्त्यन्तरेभ्यो व्यावृत्तमुत्पलमवगम्यते, तथा यदन्येभ्योऽसत्यादिभ्यो व्यावृत्तमवधार्यते तद्ब्रह्म—इत्येवं व्यावृत्तत्वे सति, सच्चिदेकतानं परिपूर्णं तदिति ज्ञातं भवति; व्यावृत्तिश्चेन्न ज्ञायते, तदाऽनृतादिभ्यो व्यावृत्त्यसिद्धेः, न ब्रह्म ज्ञातं स्यादित्यर्थः ।

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

गात्; यथाऽसावेक आदित्य इति, तथैकमेव च ब्रह्म, न ब्रह्मान्तराणि, येभ्यो विशेष्येत नीलोत्पलवत्। न, लक्षणार्थत्वाद्विशेषणानाम्—नायं दोषः। कस्मात्? यस्माल्लक्षणार्थप्रधानानि विशेषणानि, न विशेषणप्रधानान्येव। कः पुनर्लक्षणलक्ष्ययोर्विशेषणविशेष्ययोर्विशेष इति? उच्यते—समानजातीयेभ्य एव निवर्तकानि विशेषणानि विशेष्यस्य, लक्षणं तु सर्वत एव, यथाऽवकाशदात्राकाशमिति; लक्षणार्थं च वाक्यमित्यवोचाम।

---

इति नीलं विशेषणं घटते; न तथा सत्यत्वादिकं व्यभिचरद्ब्रह्मान्तरं लोके प्रसिद्धम्; ततः सजातीयस्य व्यवच्छेद्यस्याभावाद्विशेषणविशेष्यभावो न घटत इत्यर्थः। विशेषणविशेष्यभावस्य तात्पर्येणाप्रतिपाद्यत्वात्, अव्याकृतादिशास्त्रीयब्रह्मपदार्थव्यवच्छेदेनानिर्वाच्यविशेषणविशेष्यभावसंभवात्, तद्द्वारेण ब्रह्मलक्षणं विवक्षितमित्याह—नेति। संग्रहवाक्यं विवृणोति—नायं दोष इत्यादिना। सर्वत एवेति—सजातीयाद्विजातीयाच्च—यथा महाभूतत्वेन सदृशभावात्पृथिव्यादेः, विसदृशाच्चाऽऽत्मादेः। आकाशस्य व्यावर्तकमवकाशदातृत्वमित्यर्थः। एतदुक्तं भवति—अतिव्याप्त्यादिरहितो व्यावर्तको धर्मो लक्षणं न्यायविशेष इति मीमांसकाः। ब्रह्मपदव्युत्पत्तिबलेन यदविशेषतः प्रतिपन्नं किंचिन्महदस्तीति तत् 'सत्यं ज्ञानमनन्तम्' 'अनृतजडपरिच्छेदविरोधिस्वरूपम्'—इति विशेषतः प्रतिपत्तव्यमिति विशेषावगतिशेषभूतं लक्षणम्; प्रमितिस्तु प्रमाणादेवेति। तार्किकाः पुनर्लक्षणं केवलव्यतिरेक्यनुमानमाचक्षते, तदा लक्षणादेव स्वभावविशेषप्रमितिः, यथा—गुणवद्द्रव्यमितिलक्षणाद्गुणाश्रयत्वयोग्यस्वभावविशेषस्य प्रमितिः सामान्यप्रतिपन्नस्य द्रव्यपदाभिधेयस्य भवति; यद्वा व्यवहारसिद्धिः फलम्—गुणवद्द्रव्यमिति व्यवहर्तव्यं गुणवत्त्वात्, न यदेवं न तदेवम्, यथा रूपम्; तथा सत्यत्वादिमद्ब्रह्मेति व्यवहर्तव्यं सत्यत्वादिमत्त्वात्, न यदेवं न तदेवम्, यथा घट इति; एतच्च खण्डनेयुक्त्यसहमानमपि व्यवहाराङ्गं भवतीति नातीव सूक्ष्मेक्षिका कार्या।

---

(१) °योर्वावि°—पाठः। (२) सर्वं हि लक्षणमितरपदार्थव्यवच्छेदकम् (न्या॰ वा॰ १. १. १४.); व्यावृत्तिर्व्यवहारो वा लक्षणस्य प्रयोजनम्। तत्र व्यवहारो (शब्दव्यवहारः, शब्दशक्तिग्रहः) लक्षणज्ञानस्य प्रयोजनं, यथा—सास्नादिमान् गौः—इति लक्षणज्ञाने सति, यं यं सास्नादिमन्तं पिण्डं पश्यति, तं तं गोशब्दवाच्यं प्रत्येति—इति। व्यावृत्तेः प्रयोजनत्वे सर्वं लक्षणं (अभिधेयत्वव्यावर्तकत्वादिवर्जम्) व्यतिरेकिहेतुर्भवति। एतच्च 'व्यावृत्तिर्व्यवहारो वा लक्षणस्य प्रयोजनम्' इति परोक्तमेकं पक्षमाश्रित्योक्तम्, न तु स्वमतम्—लक्षणवाक्यमात्रस्य सिद्धान्तिभिरखण्डार्थताभ्युपगमात्। तुल्य संक्षेप॰ शा॰ १. ५१५–५२०. (३) "लक्षणाधीना तावल्लक्ष्यस्थितिः, लक्षणानि चाऽनुपपन्नानि, ज्ञानाधिकरणादिलक्षणनिरूपणद्वारेण चक्रकाद्यापत्तेः"—इति खण्डनखण्डखाद्ये प्रथमपरिच्छेदे। तदर्थस्तु किं ज्ञानम्?—इति प्रश्ने ज्ञानत्वयोगीति निर्वाच्यम्। पुनः किं ज्ञानत्वम्?—इत्यनुयोगे सुखाद्यवृत्तिरात्मविशेषगुणवृत्तिर्जातिरिति निर्वाच्यम्। जातिरेव का?—इत्य-



CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

सत्यादिशब्दा न परस्परं संबध्यन्ते परार्थत्वात्, विशेष्यार्था हि ते। अत एव एकैको विशेषणशब्दः परस्परं निरपेक्षो ब्रह्मशब्देन संबध्यते—'सत्यं ब्रह्म', 'ज्ञानं ब्रह्म,' 'अनन्तं ब्रह्म' इति।

---

पुनर्विशेषणविशेष्यभावपक्षमवलम्ब्याऽऽह—सत्यादिशब्दा इति। 'सत्यं ब्रह्म' इत्युक्ते, जाड्यव्यावृत्तिः परिच्छेदव्यावृत्तिश्च यद्यपि लभ्यते, जडस्य परिच्छिन्नस्य सर्वस्यानृतत्वात्; 'ज्ञानं ब्रह्म' इत्युक्ते चानृतपरिच्छेदव्यावृत्तिर्लभ्यते स्वप्रकाशस्य बाधाविषयत्वात्, परिच्छेदग्राहकप्रमाणाविषयत्वाच्च; लक्षणमपि चैकैकं वैकल्पिकमदुष्टम्;—तथाऽपि मन्दमतिव्युत्पादनाय स्यात्।

---

नुयोगे चानुवृत्तिज्ञानासाधारणं कारणमित्यभिधानीयम्—इति ज्ञानसिद्धौ जातिसिद्धिः, तत्सिद्धौ च तद्विशेषभूतज्ञानत्वस्य सिद्धिः, तत्सिद्धौ च ज्ञानसिद्धिरिति चक्रकम्। आदिशब्दात्तथैव ज्ञानसिद्धौ ज्ञानत्वसिद्धिः, तत्सिद्धौ च ज्ञानसिद्धिः—इत्यन्योन्याश्रयः। ज्ञानसिद्धौ ज्ञानसिद्धिरित्यात्माश्रयश्चेति। तथा लक्षणानि लक्ष्याधिकरणानि वाच्यानि; ततश्च किमधिकरणमिति प्रश्ने इहप्रत्ययविषय इति कथनीयम्; कः प्रत्ययः?—इत्यनुयोगे च प्रत्ययत्वयोगीति वाच्यम्; किं प्रत्ययत्वम्?—इत्यनुयोगे च सुखाद्यवृत्तिरात्मविशेषगुणवृत्तिजातिविशेष इत्युत्तरम्; क आत्मा?—इति जिज्ञासायामात्मत्वाधिकरणम्, पुनरधिकरणमिहप्रत्ययविषय इति चक्रकं, पूर्ववदेवान्योन्याश्रयात्माश्रयौ चेत्यादिः—इति तत्र टिप्पणी। ज्ञाताधिकरणेति शंकरमिश्रसंमतः पाठः। तदर्थस्तु 'लक्षणेन हि गन्धवत्त्वादिना ज्ञाते लक्ष्ये पृथिवीस्वरूपेऽधिकरणे प्रतिबन्ध–(व्याप्ति) बलेन व्यवहाररूपमितरभेदरूपं वा साध्यं साधनीयम्। तत्र लक्षणज्ञानमन्यलक्ष्यसाधारण्येन भवदप्यकिंचित्करमिति व्यावृत्ततया तज्ज्ञानमुपेयम्; तद्यदि लक्षणव्यावृत्तिर्लक्ष्याधीना, तदाऽन्योन्याश्रयः; लक्ष्यपरतन्त्रलक्षणान्तराधीनत्वे चक्रकम्; लक्षणे लक्षणान्तरम्, तत्रापि लक्षणान्तरमित्यपरावृत्तावनवस्था; एवं भवदप्यकिञ्चित्करमिति। एवं जलादिसाधारण्येन ज्ञातायां पृथिव्यामितरभेदसाधनमकिञ्चित्करमितिव्यावृत्तायां तस्यां तत्साधनं वाच्यम्, तद्व्यावृत्तिर्यदि प्रकृतलक्षणाधीना, तदान्योन्याश्रयः; लक्षणान्तरेण चेत्तदा प्रकृतलक्षणानुपयोगः, तदपि लक्षणं व्यावृत्तायामेव तस्यामित्यधोऽधो धावन्त्यनवस्था। एवं प्रतिबन्ध–(व्याप्ति) ज्ञानसाध्यज्ञानादावप्यूह्यम्" इति शंकरमिश्रव्याख्यायाम्।

(१) लौकिकदृष्ट्यनुसारिणमेकलक्षणपरत्वपक्षमुपपादयति—सत्यादिशब्दा इति। लोके हि सत्यमित्युक्ते व्यवहाराबाधितमात्रं प्रतीयते, न तु ब्रह्मैव; एवं ज्ञानमित्युक्ते वृत्तिसंवलितमेव प्रतीयते; अनंतपदेन च कालाद्यपरिच्छिन्नमेव। अतोऽतिप्रसक्तार्थकत्वेन प्रत्येकं लक्षणत्वासंभवाद्विशिष्टे शक्तानां पदानां, शुद्धे लक्षणया वृत्तिमङ्गीकृत्यैकलक्षणपरत्वमुक्तम्। अन्यव्यावृत्तिमुखेनैकार्थपर्यवसायिनां पदानां लक्ष्यार्थाभेदेऽपि व्यवच्छेद्यभेदाद्पुनरुक्तार्थसंभवात्, न पदान्तरवैयर्थ्यम्। तत्रैतावान् विशेषो वार्तिककृद्भिरुक्तः—सत्यज्ञानपदे सत्यत्वं ज्ञानत्वं विधाय, अर्थादितरव्यावृत्तिं बोधयतः; अनंतपदं तु साक्षादेव परिच्छिन्नतां वारयतीति। एवं सति धर्मधर्मिभावादिरूपो भेदो न प्रसज्यते। यतः सत्यपदं ब्रह्मणि भ्रमसक्तमसत्त्वं वारयति, ज्ञानपदं जडत्वं, अनन्तपदं तु परिच्छिन्नत्वं वारयति, तत एवं व्यावृत्तिपरत्वात् 'नीलमुत्पलम्' इत्यादिवाक्यस्य यथा गुणगुणिभावसंसर्गपरत्वं विशिष्टपरत्वं वा भवति, तथाऽस्य वाक्यस्य न बोध्यम्; किं त्वखण्डार्थपरत्वमेवेत्यर्थः। तुल्य—संक्षेप. शा. १.१७८–१८८.

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

सत्यमिति—यद्रूपेण यन्निश्चितं तद्रूपं न व्यभिचरति, तत्सत्यम्; यद्रूपेण यन्निश्चितं तद्रूपं व्यभिचरति, तदनृतमित्युच्यते। अतो विकारोऽनृतम्—"वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्[1]," एवं "सदेव ... सत्यम्[2]"—इत्यवधारणात्; अतः 'सत्यं ब्रह्म' इति ब्रह्म विकारान्निवर्तयति।

ब्रह्म सत्यम्

अतः कारणत्वं प्राप्तं ब्रह्मणः। कारणस्य च कारकत्वम्, वस्तुत्वान्मृद्वद्-चिद्रूपता च प्राप्ता—अत इदमुच्यते 'ज्ञानं ब्रह्म' इति। 'ज्ञानं' ज्ञप्तिरवबोधः,—भावसाधनो ज्ञानशब्दः—न ज्ञानकर्तृ, ब्रह्मविशेषणत्वात्सत्यानन्ताभ्यां सह।

ब्रह्म ज्ञानम्

नहि सत्यताऽनन्तता च ज्ञानकर्तृत्वे सत्युपपद्येते। ज्ञानकर्तृत्वेन हि विक्रियमाणं कथं सत्यं भवेदनन्तं च? यद्धि न कुतश्चित्प्रविभज्यते, तदनन्तम्। ज्ञानकर्तृत्वे च ज्ञेयज्ञानाभ्यां प्रविभक्तमित्यनन्तता न स्यात्—"यत्र ...... नान्यद्विजानाति स भूमा। अथ ... यत्रान्यद्विजानाति तदल्पम्[3]" इति श्रुत्यन्तरात्।

'नान्यद्विजानाति' इति विशेषप्रतिषेधादात्मानं विजानाति—इति चेत्, न; भूमलक्षणविधिपरत्वाद्वाक्यस्य—'यत्र नान्यत्पश्यति' इत्यादि भूम्नो लक्षणविधिपरं वाक्यम्। यथाप्रसिद्धमेवान्योऽन्यत्पश्यतीत्येतदुपादाय यत्र तन्नास्ति, स भूमेति भूमस्वरूपं तत्र ज्ञाप्यते; अन्यग्रहणस्य प्राप्तप्रतिषेधार्थत्वात्, न स्वात्मनि क्रियास्तित्वपरं वाक्यम्। स्वात्मनि च भेदाभावाद्विज्ञानानुपपत्तिः। आत्मनश्च विज्ञेयत्वे, ज्ञात्रभावप्रसङ्गः—ज्ञेयत्वेनैव विनियुक्तत्वात्। एक एवाऽऽत्मा ज्ञेयत्वेन ज्ञातृत्वेन चोभयथा भवति—इति चेत्, न युगपत्, अनंशत्वात्—नहि निरवयवस्य युगपज्ज्ञेयज्ञातृत्वोपपत्तिः। आत्मनश्च घटादिवद्विज्ञेयत्वे, ज्ञानोपदेशानर्थक्यम्। न हि घटादिवत्प्रसिद्धस्य ज्ञानोपदेशोऽर्थवान्। तस्मात्, ज्ञातृत्वे सति, आनन्त्यानुपपत्तिः; सन्मात्रत्वं चानुपपन्नं ज्ञानकर्तृत्वादिविशेष-

---

सत्यादिपदार्थव्याख्यानपूर्वकं प्रत्येकं व्यावर्त्यमाह—सत्यमिति—यद्रूपेणेत्यादिना।

भावसाधन इति—भावव्युत्पत्तिकः। क्रियासामान्यं यद्यप्यन्यत्र भाव उच्यते, तथाऽप्यत्र निर्विशेषं चिन्मात्रं भावव्युत्पत्त्या लक्ष्यते, सत्यादिशब्दसंनिधानात्—इति द्रष्टव्यम्।

'विशेषनिषेधः शेषाभ्यनुज्ञाविषयः' इति न्यायेन, प्रासङ्गिकं स्वज्ञातृत्वे तात्पर्यमाशङ्क्य निषेधति—नान्यद्विजानातीत्यादिना। कर्तृत्वं, कर्मत्वं चैकक्रियावच्छिन्नं धर्मद्वयं

---

(१) छां. उ. ६. १. ४ (२) 'सदेव सोम्य' इति प्रकृत्य 'तत्सत्यम्'—इति नवकृत्वः श्रुतम्—छां. उ. ६. २. १—६. ८. ७ (३) छां. उ. ७. २४. १

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

वत्त्वे सति; सन्मात्रत्वं च सत्यम्, "तत्सत्यम्" इति श्रुत्यन्तरात् । तस्मात्सत्यानन्तशब्दाभ्यां सह विशेषणत्वेन ज्ञानशब्दस्य प्रयोगात्, भावसाधनो ज्ञानशब्दः । 'ज्ञानं ब्रह्म' इति कर्तृत्वादिकारकनिवृत्त्यर्थम्, मृदादिवदचिद्रूपतानिवृत्त्यर्थं च प्रयुज्यते ।

ब्रह्म अनन्तम्

'ज्ञानं ब्रह्म' इतिवचनात् प्राप्तमन्तवत्त्वम्—लौकिकस्य ज्ञानस्यान्तवत्त्वदर्शनात्; अतस्तन्निवृत्त्यर्थमाह—'अनन्तम्' इति ।

सत्यादीनामनृतादिधर्मनिवृत्तिपरत्वात्, विशेष्यस्य ब्रह्मण उत्पलादिवदप्रसिद्धत्वात्—

"मृगतृष्णाम्भसि स्नातः खपुष्पकृतशेखरः ।
एष वन्ध्यासुतो याति शशशृङ्गधनुर्धरः" ॥

इतिवच्छून्यार्थतैव प्राप्ता सत्यादिवाक्यस्येति चेत्, न; लक्षणार्थत्वात् ।

सत्यादिवाक्यस्य न शून्यार्थता-ब्रह्म वस्तुसत्

विशेषणत्वेऽपि सत्यादीनां लक्षणार्थप्राधान्यम्—इत्यवोचाम । शून्ये हि लक्ष्ये, अनर्थकं लक्षणवचनं, अतो लक्षणार्थत्वान्मन्यामहे न शून्यार्थतेति । विशेषणार्थत्वेऽपि च सत्यादीनां स्वार्थापरित्याग एव ।

---

भिन्नाधिकरणं प्रसिद्धम्, स्वात्मनि च भेदाभावात्, निरुपपत्तिके स्वज्ञातृत्वे तात्पर्यं कल्पयितुं न शक्यत इत्याह—स्वात्मनि चेति ।

सत्यादीनि व्यावृत्त्यर्थानीत्युक्तं तत्र शङ्कते—सत्यादीनामिति । प्रमाणान्तरसिद्धमुत्पलादि विशेष्यं दृष्टं, ब्रह्म तु प्रमाणान्तरासिद्धम्—पदमात्रस्याप्रमाणत्वात्, सत्यादीनां च व्यावृत्त्यर्थत्वात्, असदर्थं वाक्यं स्यादित्यर्थः । सिद्धत्वमात्रेण विशेष्यत्वे संभवति, प्रमाणान्तरविशेषणमनर्थकं केवलव्यतिरेकाभावात्; मिथ्यार्थस्य रज्जुसर्पादेः सदधिष्ठानत्वदर्शनात्, प्रपञ्चस्यापि दृश्यत्वादिहेतुभिर्मिथ्यात्वेनावगतस्य सदधिष्ठानत्वं संभाव्यते; तस्य प्रपञ्चाधिष्ठानतया संभावितस्य स्वरूपविशेषलक्षणार्थमिदं वाक्यम्, ततो नासदर्थत्वमित्याह—न: लक्षणार्थत्वादिति । विशेषणार्थत्वमभ्युपगम्याऽऽह—विशेषणार्थत्वेऽपि चेति । 'नीलं' 'महत्' इत्यादिविशेषणपदानि स्वार्थसमर्पणेन तद्विरुद्धव्यावर्तकानि प्रसिद्धानि; तथा सत्यशब्दोऽप्यबाधितसत्त्वे व्युत्पन्नः, ज्ञानशब्दः स्वप्रकाशे विषयसंवेदने, 'अनन्तोऽयमाकाशः' इत्यादौ चानन्तशब्दो व्यापके—ततः स्वार्थसमर्पणेन विरोधिव्यावर्तकत्वान्न व्यावृत्तिमात्रपर्यवसानमित्यर्थः ।

---

(१) तै. उ. २. ६; छां. उ. ६. ८. ७. (२) ?.

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

शून्यार्थत्वे हि सत्यादिशब्दानां विशेष्यनियन्तृत्वानुपपत्तिः । सत्याद्यर्थैरर्थवत्त्वे तु तद्विपरीतधर्मवद्भ्यो विशेष्येभ्यो ब्रह्मणो विशेष्यस्य नियन्तृत्वमुपपद्यते। ब्रह्मशब्दोऽपि स्वार्थेनार्थवानेव । तत्रानन्तशब्दोऽन्तवत्त्वप्रतिषेधद्वारेण विशेषणम् । सत्यज्ञानशब्दौ तु स्वार्थसमर्पणेनैव विशेषणे भवतः ।

आत्मैक्याद्ब्रह्मणोऽनन्तत्वम्

'तस्माद्वा एतस्मादात्मनः' इति ब्रह्मण्येवाऽऽत्मशब्दप्रयोगाद्वेदितुरात्मैव ब्रह्म—"एतमानन्दमयमात्मानमुपसंक्रामति" इति चात्मतां दर्शयति; तत्प्रवेशाच्च—"तत्सृष्ट्वा तदेवानुप्राविशत्" इति च, तस्यैव जीवरूपेण शरीरप्रवेशं दर्शयति । अतो वेदितुः स्वरूपं ब्रह्म ।

नित्यानन्तस्वतन्त्रं ब्रह्म

एवं तर्ह्यात्मत्वाज्ज्ञानकर्तृत्वम्—आत्मा ज्ञातेति हि प्रसिद्धम्, "सोऽकामयत" इति च कामिनो ज्ञानकर्तृत्वप्रसिद्धिः; अतो ज्ञानकर्तृत्वाज्ज्ञप्तिर्ब्रह्मेत्ययुक्तम्, अनित्यत्वप्रसङ्गाच्च; यदि नाम ज्ञप्तिर्ज्ञानमिति भावरूपता ब्रह्मणः, तथाऽप्यनित्यत्वं प्रसज्येत, पारतन्त्र्यं च, धात्वर्थानां कारकापेक्षत्वात्, ज्ञानं च धात्वर्थः; अतोऽस्यानित्यत्वं परतन्त्रता च । न, स्वरूपाव्यतिरेकेण कार्यत्वोपचारात्—आत्मनः स्वरूपं ज्ञप्तिर्न ततो व्यतिरिच्यते, अतो नित्यैव; तथाऽपि बुद्धेरुपाधिलक्षणायाश्चक्षुरादिद्वारैर्विषयाकारपरिणामिन्या ये शब्दाद्याकारावभासाः, त आत्मविज्ञानस्य विषयभूता उत्पद्यमाना एवाऽऽत्मविज्ञानेन व्याप्ता उत्पद्यन्ते । तस्मादात्मविज्ञानावभासाश्च ते, विज्ञानशब्दवाच्याश्च धात्वर्थभूता आत्मन एव धर्मा विक्रियारूपा इत्यविवेकिभिः परिकल्प्यन्ते ।

---

किंच विशेषणस्य व्यावर्तकत्वं सति व्यावर्त्ये घटते, अतो विशेषणत्वानुपपत्त्यैव सदर्थत्वं वाच्यमित्याह—शून्यार्थत्वे हीति । यच्चोक्तं ब्रह्मशब्दोऽप्रसिद्धार्थ इति तत्राऽऽह—ब्रह्मशब्दोऽपीति । "बृह बृहि वृद्धौ" इति धातोर्ब्रह्मेति शब्दो निष्पन्नो वृद्धौ महत्त्वे वर्तते । तच्च महत्त्वं देशतः कालतो वस्तुतश्चानवच्छिन्नत्वं संकोचकमानान्तराभावान्निरतिशयमहत्त्वसंपन्ने धर्मिणि पर्यवस्यति । ततो वन्ध्यासुतादिशब्दविलक्षणो ब्रह्मशब्द इत्यर्थः । सत्यादिषु त्रिषु विशेषणेष्ववान्तरभेदमाह—तत्रानन्तेति ।

अनन्तमित्यनेन चाऽऽत्मैक्यं ब्रह्मण उक्तमित्यभिप्रेत्यैक्ये शास्त्रतात्पर्यं दर्शयति—तस्माद्वा इत्यादिना । ब्रह्मण आत्मैक्यं चेद्विवक्षितं, तर्हि ज्ञानशब्दस्य भावसाधनत्वव्याख्यानं हीयेतेत्याह—एवं तर्हीति । इतश्च भावव्युत्पत्तिरसंगतेत्याह—अनित्यत्वप्रसङ्गाच्चेति

---

(१) तै. उ. २. ८. (२) °आत्मतां दर्शयति° । इति केषुचिदादर्शपुस्तकेषु नोपलभ्यते । (३) तै. उ. २. ६. (४) बृ. उ. १. २. ४; तै. उ. २. ६. (५) पृ. ५१

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

यत्तु ब्रह्मणो विज्ञानं, तत्सवितृप्रकाशवदग्न्युष्णत्ववच्च ब्रह्मस्वरूपाव्यतिरिक्तं स्वरूपमेव तत्; न तत् कारणान्तरसव्यपेक्षम्,—नित्यस्वरूपत्वात् । सर्वभावानां च तेनाविभक्तदेशकालत्वात्, कालाकाशादिकारणत्वात्, निरतिशयसूक्ष्मत्वाच्च न तस्यान्यदविज्ञेयं, सूक्ष्मं, व्यवहितं, विप्रकृष्टं, भूतं, भवत्, भविष्यद्वाऽस्ति; तस्मात्सर्वज्ञं तद्ब्रह्म; मन्त्रवर्णाच्च—

"अपाणिपादो जवनो ग्रहीता, पश्यत्यचक्षुः स शृणोत्यकर्णः ।

स वेत्ति वेद्यं, न च तस्यास्ति वेत्ता, तमाहुरग्र्यं पुरुषं महान्तम्" ॥ इति;

"नहि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति" इत्यादिश्रुतेश्च ।

विज्ञातृस्वरूपाव्यतिरेकात्करणादिनिमित्तानपेक्षत्वाच्च ब्रह्मणो ज्ञानस्वरूपत्वेऽपि नित्यत्वप्रसिद्धिः; अतो नैव धात्वर्थस्तत्—अक्रियारूपत्वात् । अत एव च न ज्ञानकर्तृ ।

तस्मादेव च न 'ज्ञान' शब्दवाच्यमपि तद्ब्रह्म । तथाऽपि तदाभासवाचकेन बुद्धिधर्मविशेषेण 'ज्ञान' शब्देन तल्लक्ष्यते, न तूच्यते,—

ब्रह्मणोऽवाच्यत्वम्

---

वृत्तिमदन्तःकरणोपहितत्वेनाऽऽत्मनो ज्ञातृत्वं, न स्वतः, कार्यत्वं च ज्ञानस्यान्तःकरणवृत्त्युपहितत्वेन, तत आत्माभिन्नत्वेऽपि ब्रह्मणो न ज्ञानकर्तृत्वं, नापि कार्यत्वं प्रसज्यत इत्याह—न स्वरूपेति ।

नित्यं चेज्ज्ञानं, तर्हि तत्र ब्रह्मणः कर्तृत्वाभावे कथं सर्वज्ञत्वमित्यत आह—सर्वभावानां चेति । संविदव्यवधानमेव हि विषयस्य सिद्धिः, सर्वं च संवित्स्वभावेन ब्रह्मणाऽव्यवहितमिति सर्वज्ञं ब्रह्मोपचर्यत इत्यर्थः । नित्यं ज्ञानं ब्रह्मणि विद्यत इत्यत्र मन्त्रसंमतिमाह—मन्त्रवर्णाच्चेति ।

ब्रह्मानित्यं, ज्ञानत्वाल्लौकिकज्ञानवदित्यादि चोद्यमप्युक्तन्यायेन निरस्तमित्याह—विज्ञातृस्वरूपेति । लौकिकज्ञानस्य करणादिसापेक्षत्वादनित्यत्वम् । आत्मस्वरूपं तु ज्ञानं न करणादिसापेक्षं,—सकलकरणव्यापारोपरमेऽपि सुषुप्ते भावात्; अन्यथा सुषुप्तिसिद्ध्यनुपपत्तेः परामर्शासंभवप्रसङ्गात्;—अतः श्रुतितात्पर्यगम्येऽर्थे न सामान्यतोदृष्टस्य प्रवेश इति भावः । आत्मनः स्वरूपभूतं ज्ञानं कारकसाध्यं धात्वर्थत्वादिति चासिद्धमित्याह—अत इति । नित्यात्मस्वरूपत्वादेवेत्यर्थः । अत एव चेति । नित्यत्वादेव ज्ञानस्य, न तत्र कर्तृत्वमपि ब्रह्मण आपादयितुं शक्यते ।

लौकिकानित्यज्ञानविलक्षणत्वादेव च ज्ञानशब्दवाच्यमपि ब्रह्म न भवतीत्याह—तस्मादेव

---

(१) श्वे. उ. ३. १९. (२) बृ. उ. ४. ३. ३०. (३) विषयेण—पाठः

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

शब्दप्रवृत्तिहेतुजात्यादिधर्मरहितत्वात्; तथा 'सत्य' शब्देनापि—सर्वविशेषप्रत्यस्तमितस्वरूपत्वाद्ब्रह्मणः, बाह्यसत्तासामान्यविषयेण सत्यशब्देन लक्ष्यते—'सत्यं ब्रह्म' इति, न तु 'सत्य' शब्दवाच्यमेव ब्रह्म। एवं सत्यादिशब्दा इतरेतरसंनिधावन्योन्यनियम्यनियामकाः सन्तः सत्यादिशब्दवाच्यान्निवर्तका

---

श्चेति। कथं तर्हि 'ज्ञानं' ब्रह्मेति प्रयोगः? तत्राऽऽह—तथाऽपीति। शब्दस्य प्रवृत्तिहेतवो जात्यादिधर्मा 'गौः', 'शुक्ल' इत्यादौ, तदभावाच्छब्दान्तरेणापि वाच्यं न भवतीत्याह—तथेति। तथा 'सत्य' शब्देनापि न वाच्यं ब्रह्मेति शेषः। एतत्स्फुटयति—सर्वविशेषेति। सत्ता यस्यास्ति तत्सत्यमिति लोकरूढिः। सत्ता चानुगतरूपं सामान्यं, व्यावृत्ताः सत्ताविशेषाः। स चायमनुवृत्तव्यावृत्तभावो न वस्तु परस्परापेक्षसिद्धत्वात्,—अतो यस्मिन्नयं व्यावृत्तानुवृत्तभावः कल्पितः, तदव्यावृत्तानन्तुगतं ब्रह्म लक्ष्यत इत्यर्थः। एवमेकैकस्य शब्दस्यार्थमुक्त्वा वाक्यार्थमाह—एवं सत्यादीति। यद्यपि सत्यादिशब्दानां ब्रह्मणा मुख्योऽन्वयः, तथाऽप्यरुणयैकहायन्यादिवत्पार्ष्ठिकान्वयेनेतरेतरसंनिधावन्योन्यस्य वृत्तिनियामका भवन्ति—ज्ञानेन विशेषणात् 'सत्य' शब्दो न जडे कारणे वर्तते, सत्येन विशेषणात्

---

(१) °त्वात्सत्यानन्तसामानाधिकरण्यात्तथा। °त्वात्सत्यानन्तशब्दाभ्यां सामानाधिकरण्यात्तथा इति वा पाठः। (२) प्रत्यस्तमितभेदं यत्सत्तामात्रमगोचरम्। वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसंज्ञितम्॥
तच्च विष्णोः परं रूपमरूपाख्यमनुत्तमम्। तद्विश्वरूपवैरूप्यलक्षणं परमात्मनः॥
—विष्णु. पु. ६. ८. ५३–४.

(३) 'गौः', 'शुक्लः,' 'चलः,' 'डित्थः'—इत्यादौ चतुष्टयीशब्दानां प्रवृत्तिः—इति 'ऋलृक्' इति शिवसूत्रे महाभाष्ये। "षष्ठीगुणक्रियाजातिरूढयः शब्दहेतवः। नात्मन्यन्यतमोऽमीषां तेनात्मा नाभिधीयते"॥ नै. सि. ३. १०३. क्वचित्षष्ठ्यर्थः संबन्धः शब्दप्रवृत्तिनिमित्तम्, यथा—राजपुरुष इत्यादिः; क्वचिद्गुणयोगः, यथा—शुक्लः पट इत्यादिः; क्वचित्क्रियायोगः, यथा—पाचक इत्यादिः, क्वचिज्जातियोगः, यथा गौः, अश्वः, पुरुष इत्यादिः; क्वचिद्रूढिः, यथा—आकाशः, द्यौः, अभ्रमित्यादिः। एतेषां शब्दप्रवृत्तिनिमित्तानाम्—अन्यतमस्याप्यात्मन्यसत्त्वात्—अगुणत्वात्, अविक्रियत्वात्, असामान्यत्वात्, प्रमाणान्तरायोग्यत्वेनागृहीतसंबन्धत्वाच्च—अभावान्नाभिधेय आत्मेत्यर्थः। तुलय—संक्षेपशा. १. २३९. (४) अनेकपदात्मके वाक्ये एकपदप्राधान्येनान्वयस्य वक्तव्यत्वात् प्रतिपदार्थं प्राधान्ये चान्वयाप्रतिपत्तेः, वाक्यप्रयोगवैयर्थ्यापातात्, अस्य च वाक्यस्य ब्रह्मलक्षणपरत्वात्, लक्षणानां च लक्ष्यार्थत्वात्, तद्वाचिपदप्राधान्येनान्वयात्, युक्तोऽयमुक्तो विभाग इति भावः। यद्येवं, 'सत्यं ब्रह्म', 'ज्ञानं ब्रह्म' इति प्रकारेणान्वयः स्यात्; तथाच सत्यादीनां परस्परमेकत्वासिद्धेः, एकब्रह्मस्वरूपलक्षणता तेषां न स्यात्,—अनेकस्यैकस्वरूपत्वायोगात्—इत्याशङ्क्य तेषां एकार्थावच्छेदकतया मिथ एकत्वं सदृष्टान्तमाह—यथा 'अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणाति'—(तै. सं. ६. १. ६. ७.; ७. १. ६. २.; जै. सू. ३. १. १२.) इत्यत्र क्रयवाचिना क्रीणातीतिक्रियापदेनारुणादिपदमेकक्रयावच्छेदकतयैकवाक्यभावं गच्छति, तद्वदेकस्यैव ब्रह्मवस्तुनो लक्षकतया सत्यादीनां विशेषणत्वाद्विशेषणानां च लक्षकाणां लक्ष्यस्वरूपैकपर्यवसाननियमाद्युक्तमेषामेकत्वम्। तुलय—संक्षेप. शा. १. १७५–६.

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

**यो वेद॒ निहि॑तं॒ गुहा॑यां पर॒मे व्यो॑मन् ।**

ब्रह्मणो लक्षणार्थाश्च भवन्तीति; अतः सिद्धं "यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह", "अनिरुक्तेऽनिलयने" इति च—अवाच्यत्वं, नीलोत्पलवदवाक्यार्थत्वं च ब्रह्मणः ।

तद्यथाव्याख्यातं ब्रह्म यो वेद विजानाति निहितं स्थितं गुहायाम्, (१) गूहतेः संवरणार्थस्य, निगूढा अस्यां ज्ञानज्ञेयज्ञातृपदार्था इति गुहा बुद्धिः, गूढावस्यां भोगापवर्गौ पुरुषार्थाविति वा, तस्यां—

गुहायां–बुद्धौ अव्याकृतं परमं व्योम

'ज्ञान' शब्दो न विषयसापेक्षे ज्ञाने वर्तते, ज्ञानेन विशेषणाच्च 'अनन्त' शब्दो ज्ञातृव्यतिरिक्ते वर्तते, ततश्च सत्यादिशब्देन यल्लौकिकं वाच्यं, तद्विलक्षणेन भवितव्यम्–इति संभावयन्तः सकललौकिकाध्यासाधिष्ठानं ब्रह्मत्वेन लक्षयन्तीत्यर्थः । ततः किं फलतीत्यत आह—अतः सिद्धमिति । वाचकशक्त्या बोधकत्वानङ्गीकारात् 'अवाच्यत्वम्' सकलानिष्टव्यवच्छेदेनैकस्यैव लक्ष्यत्वाभ्युपगमाच्च गुणगुण्यादिसंभेदरूपवाक्यार्थवैलक्षण्यं च ब्रह्मणः सिद्धमित्यर्थः।

बुद्धौ कार्ये यदनुगतं परमं व्योमाव्याकृताख्यं, तस्मिन्निहितमिति सप्तमीद्वयं वैय-

(१) तै. उ. २.४,९. (२) तै. उ. २.७. (३) आत्मनो बुद्धिसाक्षिणो ज्ञेयं परं ब्रह्मेत्युक्ते तयोर्भेदबुद्धिरुपजायते, तन्निवृत्त्यर्थं बुद्धौ बाह्याकाशापेक्षया प्रकृष्टं यदाकाशम्, तत्र निहितं ब्रह्मेत्युच्यते; तथाच ज्ञेयं ब्रह्म साक्षिणि तावन्मात्रमवशिष्यते, सोऽपि साक्षी ब्रह्ममात्रम्—इति न तयोर्भेदशङ्कास्ति । (४) तत्त्वमस्यादिमहावाक्यस्य, तथा सत्यं ज्ञानमनन्तं ब्रह्मेत्याद्यवान्तरवाक्यस्य पदधर्मः सामानाधिकरण्यं प्रथमं भवति। अपर्यायपदानामेकार्थवृत्तित्वं सामानाधिकरण्यम् । इह पदानामेकविभक्त्यन्ततयैकार्थबोधानुगुणव्यापारवत्त्वात् सामानाधिकरण्यं प्रथमं प्रत्येतव्यम् । सति च तस्मिन्सामानाधिकरण्ये वाच्यपदार्थानां परस्परविशेषणविशेष्यभावेनान्वयः स्यात् । वाक्यवृत्तेरनवगमे वाक्यार्थानवगमात्, अर्थान्वयावगमस्य पदान्वयावगमानन्तर्यम् । विशेषणविशेष्यभावो नाम व्यावर्त्तकव्यावर्त्त्यभावः । यतो विशेषणैर्विशेष्यं सजातीयादेर्व्यावर्त्यते; अर्थाद्विशेषणान्यपि तदेकनिष्ठतया नियम्यन्ते; अन्यथा तद्विशेषणत्वायोगात् । वाच्यपदार्थविरोधस्फूर्तौ वाच्यपदार्थैः सह वाक्यतात्पर्यविषयस्याखण्डैकरसब्रह्मणो लक्ष्यलक्षणसंबन्धः । इतरत्र हि गामानयेत्यादिशब्दाः क्रियाकारकसंसर्गं प्रतिपादयन्ति । 'उद्भिदा यजेत' इति चोद्भिद्यागशब्दयोरेकार्थत्वेऽपि नियोगाकांक्षा विद्यते । नीलमुत्पलमित्यत्र गुणगुणिनोर्भेदाभेदौ प्रतिपाद्यौ । एकार्थप्रतिपादकेष्वप्यन्येषु शब्देषु लिङ्गसंख्ये अवर्जनीये । वेदान्तास्तु न तथा संसर्गं वा, साकांक्षार्थं वा, भेदाभेदौ वा, लिङ्गसंख्याविशिष्टं वा, प्रतिपादयन्ति । किन्तु अभिधावृत्त्या, लक्षणावृत्त्या, जहदजहल्लक्षणया, उपाधिद्वारा वाऽखण्डैकरसमेव जगत्कारणसामान्यानुवादेन प्रतिपादयन्ति । ज्ञानानन्दशब्दौ व्यक्त्यंशापरित्यागेन मुख्यवृत्त्या वर्तेते; एकादिशब्दास्तु जहल्लक्षणया, तत्त्वमसीत्यादयो जहदजहल्लक्षणया, सर्वज्ञादयास्तूपाधितः । तुल्य–नै. सि. ३. ९.

ज्ञातव्यं ब्रह्म यत्तत्किमिति चेत्तस्य लक्षणम् । सत्यं ज्ञानमनन्तं यत्तद्ब्रह्मेत्यवगम्यताम् ॥ ७ ॥
आकाशादि जगत्सर्वमनृतं मायिकत्वतः । नानृतं ब्रह्म तेनैतत्सत्यमित्यभिधीयते ॥ ८ ॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

परमे प्रकृष्टे व्योमन्व्योम्न्याकाशेऽव्याकृताख्ये—तद्धि 'परमं व्योम' "एतस्मिन्नु खल्वक्षरे गार्ग्याकाशः" इत्यक्षरसंनिकर्षात्; (२) गुहायां व्योमन्–इति च सामानाधिकरण्यात्, अव्याकृताकाशमेव गुहा; तत्रापि निगूढाः सर्वे पदार्थास्त्रिषु कालेषु कारणत्वात्सूक्ष्मतरत्वाच्च, तस्मिन्नन्तर्निहितं ब्रह्म; (३) हार्दमेव तु परमं व्योमेति न्याय्यं, विज्ञानाङ्गत्वेन व्योम्नो विवक्षितत्वात्।

अव्याकृतमेव गुहा

हृदयाकाश एव परमं व्योम

---

धिकरण्येन व्याख्यातम्। व्योमशब्दस्य भूताकाशे रूढिं परित्यज्य, किमित्यव्याकृतविषयत्वं व्याख्यातम्? तत्राऽऽह—तद्धीति। भूताकाशस्य कार्यत्वेनापरमत्वात्, अव्याकृताकाशस्य कारणत्वेन परमत्वविशेषणसंभवात्, शाखान्तरे शतपथे चाक्षरेण ब्रह्मणा सामीप्यावगमात्, अव्याकृतं व्योमशब्देन लक्ष्यत इत्यर्थः। एवं पराभिप्रायेण व्याख्याय स्वाभिप्रायं व्याचष्टे—हार्दमेव त्विति। हृदयावच्छिन्ने भूताकाशे या गुहा, तस्यां—बुद्धौ—साक्षितया 'निहितम्' अभिव्यक्तं ब्रह्मेति व्याख्यानं युक्तम्–द्रष्टृभेदेन ब्रह्मण आपरोक्ष्यलाभात्; अन्यथा समष्टिरूपेऽव्याकृते मायातत्त्वेऽवस्थितं ब्रह्मेत्युक्ते ब्रह्मणः पारोक्ष्यं प्रसज्येत, पारोक्ष्येण च ज्ञानं नापरोक्षसंसाराध्यासनिवर्तकम्। तस्मादपरोक्षद्रष्टृचैतन्याभेदेन ब्रह्मणः स्वहृदये प्रत्यक्षताया विवक्षितत्वाद्धृदयाकाशमेव विज्ञानशेषभूतं विवक्षितमित्यर्थः।

---

जगज्जडं स्वतः स्फूर्तिराहित्याद्ब्रह्म तु स्वयम्। स्फुरतीत्यजडं तेन ज्ञानमित्यभिधीयते ॥ ९ ॥
जडं घटाद्यन्तवत्स्याद्देशकालादिवस्तुभिः। न देशादिकृतोऽन्तोऽस्य ब्रह्मानन्तं ततः स्मृतम्॥ १० ॥
देशकालाद्यन्यवस्तुत्रयं मायाविजृंभितम्। ब्रह्म सत्यं मायिकैस्तैः परिच्छिन्नं कथं भवेत्॥ ११ ॥
जडानृतपरिच्छिन्नव्यावृत्त्यैव पदत्रयम्। लक्षकं स्यादखण्डस्य यत्तद्ब्रह्मेति बुध्यताम्॥ १२ ॥

—तैत्तिरीयकविद्याप्रकाशः

(१) बृ. उ. ३. ८. ११. (२) हृदयपुण्डरीकस्य मध्ये स्वांगुष्ठपरिमितो यः प्रसिद्ध आकाशः, स एवात्र परमं व्योमेत्युच्यते। जागरणव्यवहारहेतुं, स्वप्नव्यवहारहेतुं देहमध्यवर्त्याकाशं बाह्याकाशं चापेक्ष्य सर्वदुःखरहितयोः सुषुप्तिसमाध्योः स्थानत्वेन हृदयाकाशस्योत्कृष्टत्वं युक्तम्। तस्मिन्नाकाशेऽवस्थिता बुद्धिर्गुहा, तस्यां ज्ञातृज्ञेयज्ञानरूपत्रिपुटीव्यवहारस्य भ्रान्तिविवेकाभ्यां संपादितयोर्भोगमोक्षयोश्च निगूढत्वात्तया बुध्योपलभ्यत्वेन ब्रह्म तत्र निहितम्। तत्र हि प्रत्यग्ब्रह्मास्ति। तुलय–"सर्वत्रापि स्थितं ब्रह्म बुद्धावेवोपलभ्यते। गुहायां निहितं तेन बुद्धिस्थं वेद ईरितम्" ॥ आत्मपु. १०. १८६.; तथाचोक्तं योगभाष्ये (४. २२.) "न पातालं न च विवरं गिरीणां नैवान्धकारं कुक्षयो नोदधीनाम्। गुहा यस्यां निहितं ब्रह्म शाश्वतं बुद्धिवृत्तिमविशिष्टां कवयो वेदयन्ते"॥ "गुहाहितं गह्वरेष्ठं पुराणम्" (कठ. उ. २. १२.) इत्यादिश्रुतिषु, यस्यां गुहायां शाश्वतं ब्रह्म निहितमित्युक्तं सा गुहा, न पातालादि–किन्तु अविशिष्टां (चित्तादात्म्यापन्नां) बुद्धिवृत्तिं–ज्ञानवृत्तिमेव पण्डिताः पश्यन्ति—इति संक्षेपार्थः; पंचदशी ३. २. (३) °नोपासनाङ्गत्वेन–इत्यधिको पाठः।

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

सोऽश्नुते सर्वान्कामान्त्सह । ब्रह्मणा विपश्चितेति ॥

"......यो वै स बहिर्धा पुरुषादाकाशः......यो वै सोऽन्तः पुरुष आकाशः......योऽयमन्तर्हृदय आकाशः..." इति श्रुत्यन्तरात्प्रसिद्धं हार्दस्य व्योम्नः परमत्वम् । तस्मिन्हार्दे व्योम्नि या बुद्धिर्गुहा, तस्यां निहितं ब्रह्म—तद्वृत्त्या वि-

ब्रह्मवेदनम्

विक्ततयोपलभ्यते—इति । न ह्यन्यथा विशिष्टदेशकालसंबन्धोऽस्ति ब्रह्मणः, सर्वगतत्वान्निर्विशेषत्वाच्च ।

स एवं ब्रह्म विजानन्, किमित्याह—अश्नुते भुङ्क्ते सर्वान्निरवशेषान्कामान्

परमपुरुषार्थः–

काम्यभोगानित्यर्थः । किमस्मदादिवत्पुत्रस्वर्गादीन्पर्यायेण ?

परप्राप्तिः

नेत्याह—सह युगपदेकक्षणोपारूढानेवैकयोपलब्ध्या सवितृप्रकाशवन्नित्यया, ब्रह्मस्वरूपाव्यतिरिक्तया, यामवोचाम 'सत्यं ज्ञानमनन्तम्' इति । एतत्तदुच्यते—ब्रह्मणा सहेति । ब्रह्मभूतो विद्वान्ब्रह्मस्वरूपेणैव सर्वान्का-

---

यदुक्तं भूताकाशस्य परमत्वानुपपत्तिरिति तत्राऽह—यो वा इति । ननु निहितशब्दः स्थितिं ब्रूते, कथं विविक्ततया स्फुटतयोपलम्भाभिप्रायेण व्याख्यायते ? तत्राऽऽह—न हीति । अन्यथेति । उपलम्भव्यतिरेकेण ।

---

(१) छां. उ. ३. १२. ७–८–९. (२) अविद्याध्यस्तबुद्धिसम्बन्धकृतकर्तृत्वादिधर्मवत्त्वादात्मनो बुद्धौ निहितत्वोक्तिः । अथवा सात्विकबुद्धिवृत्त्या 'ब्रह्मास्मि' इतिवाक्योत्थया ब्रह्मणो दर्शनाद्ब्रह्म बुद्धिस्थमुक्तम् । (३) तद्वृत्त्यावृत्त्या–वाणीविलासमुद्रितपुस्तके पाठः । (४) निरवशिष्टान् कामान् भो°–इति पाठः । (५) सर्वज्ञब्रह्मरूपेण । इयं तृतीया 'पुत्रेण सहाऽऽगतः'—इतिवन्न सहयोगलक्षणा, अपितु 'श्वेतच्छत्रेण राजानमद्राक्षीत्'—इत्यादिवत्, इत्थंभावे तृतीया । सहशब्दस्य युगपदर्थत्वेऽपि यौगपद्यस्य भेदसापेक्षत्वादप्रसक्तिरितिचेद्—न, 'अहं ब्रह्मास्मि' इति ज्ञानादज्ञाननिवृत्त्या तत्कार्यासत्यपरिच्छेदादिनिवृत्तेः साक्षात्कृतब्रह्मा ब्रह्मविदात्मरूपेण ब्रह्मरूपेण च सर्वानानन्दान् यौगपद्येनानुभवति ।

तादृग्ब्रह्म कथं विद्यादिति चेदभिधीयते । गुहायां परमे व्योम्नि स्थितं ब्रह्म तु वेद यः ॥ १३ ॥
देहादभ्यन्तरः प्राणः प्राणादभ्यन्तरं मनः । ततः कर्ता ततो भोक्ता गुहा सेयं परंपरा ॥ १४ ॥
पंचकोशगुहायां यदज्ञानं कारणं स्थितम् । तद्व्योम परमं तस्मिन्निगूढं ब्रह्म तिष्ठति ॥ १५ ॥
जीवे चैतन्यमेवात्र निगूढमिति चेत्तदा । तस्यैव ब्रह्मतां विद्याज्जीवत्वभ्रान्तिहानये ॥ १६ ॥
स्वतो ब्रह्मैव चैतन्यं जीवत्वं प्राणधारणात् । कोशतादात्म्यविभ्रान्त्या भात्यस्य प्राणधारणम् ॥१७॥
वक्ष्यमाणविवेकेन तत्तादात्म्यमपोह्यते । ब्रह्मसात्कृतिस्त्वीदृग्बोधेनैव न चान्यथा ॥ १८ ॥
बाह्यं जगत्पंचकोशांश्चापोह्यान्तर्मुखास्य धीः । ब्रह्म साक्षात्करोत्येव सर्वोपाधिविवर्जितम् ॥ १९ ॥
सोपाध्येव बहिर्दृष्ट्या भाति ब्रह्म न तावता । अपैति जीवता तस्मादन्तर्दृष्ट्यैव बुध्यताम् ॥ २० ॥
बहिर्दृष्टिर्जगद्भानं तस्य सत्यत्वधीरपि । विवेकात्सत्यताऽपैति जगद्भानं तु योगतः ॥ २१ ॥
बहिर्दृष्ट्यावपयातामन्तर्दृष्ट्या यदीक्ष्यते । निगूढं जीवचैतन्यं तद्ब्रह्मेति प्रपश्यति ॥ २२ ॥

—तैत्तिरीयकविद्याप्रकाशः

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

मान्सहाश्नुते, न यथोपाधिकृतेन स्वरूपेणाऽऽत्मना जलसूर्यकादिवत्प्रतिबिम्बभूतेन सांसारिकेण धर्मादिनिमित्तापेक्षांश्चक्षुरादिकरणापेक्षांश्च सर्वान् कामान्पर्यायेणाश्नुते लोकः । कथं तर्हि ? यथोक्तेन प्रकारेण सर्वज्ञेन, सर्वगतेन, सर्वात्मना, नित्यब्रह्मात्मस्वरूपेण धर्मादिनिमित्तानपेक्षांश्चक्षुरादिकरणनिरपेक्षांश्च सर्वान्कामान्सहैवाश्नुत इत्यर्थः । विपश्चिता मेधाविना सर्वज्ञेन । तद्धि वैपश्चित्यं यत्सर्वज्ञत्वं, तेन सर्वज्ञस्वरूपेण ब्रह्मणाऽश्नुत इति । इतिशब्दो मन्त्रपरिसमाप्त्यर्थः ॥

---

सर्व एव वल्ल्यर्थो 'ब्रह्मविदाप्नोति परम्' इति ब्राह्मणवाक्येन सूत्रितः, स च सूत्रितोऽर्थः संक्षेपतो मन्त्रेण व्याख्यातः, पुनस्तस्यैव विस्तरेणार्थनिर्णयः कर्तव्यः—इत्युत्तरस्तद्वृत्तिस्थानीयो ग्रन्थ आरभ्यते—'तस्माद्वा एतस्मात्' इत्यादिः ।

उत्तरग्रन्थसंगतिः

तत्र च 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्युक्तं मन्त्रादौ; तत्कथं 'सत्यं' 'अनन्तं' चेति ? अत आह । तत्र त्रिविधं ह्यानन्त्यं—देशतः, कालतः, वस्तु-

ब्रह्मण आनन्त्यप्रपञ्चः

---

अविद्यावस्थायां ये सुखविशेषा हिरण्यगर्भाद्युपाधिषु भोग्यत्वेनाभिमताः, तेषां सर्वेषां ब्रह्मानन्दाव्यतिरेकात्, ब्रह्मीभूतो विद्वान्सर्वानेवाऽऽनन्दानश्नुत इत्युपचारेण बहुवचनमित्यर्थः ॥

---

वृत्तमनुवदत्युत्तरग्रन्थावतारणाय—सर्व एवेत्यादिना ।

---

( १ ) न तथा यथा—वा. वि. पाठः । ( २ ) सर्वपदार्थानां त्रिधा परिच्छिन्नत्वात्, ब्रह्मणोऽपि वस्तुत्वेन विभक्तत्वात्, रज्जुसर्पवदेव सत्यत्वायोगात्, असत्यत्वादेव जडत्वात्, कोशपंचकविलक्षणं सत्यज्ञानानन्तानन्दात्मकं निर्विशेषं निर्भयं ब्रह्मात्मेत्युक्तो मन्त्रार्थो न सिध्यति—इति चेत्, न—सर्वजगत्कारणत्वाद्ब्रह्मणस्त्रिविधमानन्त्यं सिध्यति; अतश्च सत्यत्वं, ज्ञानत्वं च तस्मिन्नुपपद्यते । तच्चानन्त्यं सर्वकारणत्वकृतमनन्तरमेव प्रकटीक्रियते । ( ३ ) अविद्यावस्थायामुपाध्यवच्छेदाद्विभक्तवदभिव्यक्तेर्बहूक्तिः ।

दृष्टे तस्मिन्परप्राप्त्या विदुषोऽतिशयोऽत्र कः । इति चेद्युगपत्सर्वकामाप्तिरधिका भवेत् ॥ २३ ॥
काम्यन्ते विषयानन्दा निखिलैः प्राणिभिः सदा । ब्रह्मानंदस्य ते सर्वे लेशा इत्यपरा श्रुतिः ॥ २४ ॥
आनन्दहेतवो बाह्या विषया इति विभ्रमात् । कामयन्ते बहिर्दृष्ट्या विषयान्प्राणिनोऽखिलाः ॥ २५ ॥
अभीष्टविषये लब्धे धीः प्रत्यावृत्त्य हृद्गतम् । ब्रह्मानंदं क्षणं भुक्त्वा बाह्यं कामयते पुनः ॥ २६ ॥
क्षणिकत्वाल्लेशतास्य पूर्णस्याप्युपचर्यते । विषयानंदता भ्रान्त्या ब्रह्मानन्दो हि वस्तुतः ॥ २७ ॥
अन्तर्दृष्ट्या विवेकी तु ब्रह्मानन्दं सदेक्षते । अन्तर्भवन्ति क्षणिकाः सर्वे तस्मिन्निरन्तरे ॥ २८ ॥
तत्त्वविद्ब्रह्मरूपेण सर्वान्कामान् सहाश्नुते । इत्येषोऽतिशयो ब्रह्म-प्राप्तिरूपं फलं श्रुतम् ॥ २९ ॥

—तैत्तिरीयकविद्याप्रकाशः

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

तश्चेति । तद्यथा—देशतोऽनन्त आकाशः, नहि देशतस्तस्य परिच्छेदोऽस्ति । न तु कालतश्चाऽऽनन्त्यं वस्तुतश्चाऽऽकाशस्य । कस्मात्? कार्यत्वात् । नैवं ब्रह्मण आकाशवत्कालतोऽप्यन्तवत्त्वम्, अकार्यत्वात्; कार्यं हि वस्तु कालेन परिच्छिद्यते, अकार्यं च ब्रह्म, तस्मात्कालतोऽस्यानन्त्यम् । तथा वस्तुतः । कथं पुनर्वस्तुत आनन्त्यम्? सर्वानन्यत्वात् । भिन्नं हि वस्तु वस्त्वन्तरस्यान्तो भवति, वस्त्वन्तरबुद्धिर्हि प्रसक्ता(१)द्वस्त्वन्तरान्निवर्तते; यतो यस्य बुद्धेर्निवृत्तिः(२), स तस्यान्तः । तद्यथा गोत्वबुद्धिरश्वत्वान्निवर्तत इत्यश्वत्वान्तं गोत्वमित्यन्तवदेव भवति—स चान्तो भिन्नेषु वस्तुषु दृष्टः; नैवं ब्रह्मणो भेदः, अतो वस्तुतोऽप्यानन्त्यम् ।

कथं पुनः सर्वानन्यत्वं ब्रह्मणः इति?—उच्यते, सर्ववस्तुकारणत्वात्—सर्वेषां हि वस्तूनां कालाकाशादीनां कारणं ब्रह्म । कार्यापेक्षया वस्तुतोऽन्तवत्त्वमिति चेत्, न; अनृतत्वात्कार्यवस्तुनः—नहि कारणव्यतिरेकेण कार्यं नाम वस्तुतोऽस्ति, यतः कारणबुद्धिर्विनिवर्तेत; "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्", एवं "सदेव...सत्यम्" इति श्रुत्यन्तरात्(३) । तस्मात्—आकाशादिकारणत्वात्—देशतस्तावदनन्तं ब्रह्म । आकाशो ह्यनन्त इति प्रसिद्धं देशतः, तस्य चेदं कारणं, तस्मात्सिद्धं देशत आत्मन आनन्त्यम्—न ह्यसर्वगतात्सर्वगतमुत्पद्यमानं लोके किञ्चिद्दृश्यते । अतो निरतिशयमात्मन आनन्त्यं देशतः, तथाऽकार्यत्वात्कालतः, तद्भिन्नवस्त्वन्तराभावाच्च वस्तुतः । अत एव निरतिशयसत्यत्वम् ।

---

आकाशादिकारणत्वाभिधानेनाऽऽनन्त्यप्रपञ्चः क्रियत इति समनन्तरग्रन्थतात्पर्यं दर्शयितुं पूर्वोक्तेष्वर्थविशेषमनुवदति—तत्र चेति । वस्तुत आनन्त्यं व्याख्यातुं वस्तुनोऽन्तवत्त्वं तावदाह—भिन्नं हीत्यादिना ।

विस्तरेणोक्तमानन्त्यं संक्षिप्याऽऽह—तस्मात्सिद्धमिति । देशतोऽनवच्छिन्नस्याऽऽकाशस्य कारणत्वाद्व्यापकत्वान्निरतिशयमात्मनो देशत आनन्त्यम्, अकार्यत्वाच्च कालत आनन्त्यम्, तद्यतो व्यावर्तेत तस्य पृथगसत्त्वात्, कार्यस्योपादानादन्यत्र सत्त्वायोगाद्वस्तुतोऽप्यानन्त्यं सिद्धमित्यर्थः । अत इति । निरतिशयानन्त्यादेव सत्यत्वमपि सिद्धम्, अन्तवत एव रज्जुसर्पादिवदसत्यत्वादित्यर्थः ।

---

(१) प्रसक्ता, प्रसक्तव°—पाठौ (२) विनिवृत्तिः–पाठः । (३) छां. उ. ६. १. ४. (४) तुल्य—"यदानन्त्यं प्रतिज्ञाय श्रुतिस्तत्सिद्धये जगौ । तत्कार्यत्वं प्रपंचस्य तद्ब्रह्मेत्यवधारय ॥" वाक्यवृत्तौ ३२.

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

( व्याख्यानम् )

सृष्टिः

तस्माद्वा एतस्माद्वात्मनं आकाशः संभूतः । आका-
शाद्वायुः । वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवी ।
पृथिव्या ओषधयः । ओषधीभ्योऽन्नम् । अन्नात्पुरुषः ।

ब्रह्मात्मनोरैक्यम्

तस्मादिति मूलवाक्यसूत्रितं 'ब्रह्म' परामृश्यते; एतस्मादितिमन्त्रवाक्येनानन्तरं यथालक्षितम् । यद्ब्रह्माऽऽदौ ब्राह्मणवाक्येन सूत्रितम्, यच्च 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यनन्तरमेव लक्षितम्, तस्मादेतस्माद्ब्रह्म-

---

एवं सृष्टिवाक्यतात्पर्यमुक्त्वा पदानि विभजते तस्मादित्यादिना । अन्त्यकार्यपर्यन्तं

---

१ 'ब्रह्मविदाप्नोति परम्' इति ब्रह्मज्ञानमात्राद्ब्रह्मप्राप्तिश्रवणात्, 'ब्रह्मणा विपश्चिता' इति च ब्रह्मविदो विपश्चितो ब्रह्मणा सामानाधिकरण्यश्रवणाद्ब्रह्मात्मनोरैक्यावगमात् पूर्वोक्तसामानाधिकरण्यसामर्थ्यात् 'तस्मात्' इत्यत्रोक्ताभ्यां तदेतच्छब्दाभ्यां समानाधिकरणाभ्यां ब्रह्मात्मनोरभेदरूपं प्रत्यक्त्वं ब्रह्मणो भाति; तेन तस्मिन्नेतच्छब्दप्रयोगोपपत्तिरित्यर्थः । किञ्चास्मिन्वाक्ये ब्रह्मण्यात्मशब्दप्रयोगो दृश्यते; स चाऽऽत्मत्वे सत्येव ब्रह्मणो युज्यते, प्रतीचोऽन्यत्रात्मशब्दप्रयोगायोगात् । अतो युक्तं ब्रह्मात्मनोरैक्यम्—इति वार्तिकटीका-२. १३८. तस्मादेवैतस्मादित्युक्ते सति, ऋचा सूत्रेण च प्रतिपादितमेकमेव वस्त्वित्युक्तं भवति । अथवा परोक्षवाचिना तच्छब्देन शास्त्रगम्यो ब्रह्मत्वाकारोऽभिधीयते । वैशब्दस्तस्मिन्ब्रह्मणि सर्ववेदान्तप्रसिद्धिप्रदर्शनार्थः । प्रत्यक्षवाचिनैतच्छब्देनापरोक्षानुभवगम्यः प्रत्यगात्मत्वाकारोऽभिधीयते । तदेव विस्पष्टयितुमात्मन इत्युच्यते । तस्मादेतस्मादितिपदद्वयसामानाधिकरण्येन प्रत्यग्ब्रह्मणोस्तादात्म्यमुच्यते । एतदेव पूर्वस्यामप्यृचि 'ब्रह्मणा विपश्चिता' इति सामानाधिकरण्येनोदाहृतम्—इति सा. भाष्ये । सूत्रवाक्ये मन्त्रे च सत्यादिलक्षणोऽयमानन्दात्मा समीरितः, स भेदासंभवान्निर्भेदोऽद्वयो भवति । तत्र युक्तिस्त्वियं सृष्टिवाक्यप्रदर्शिता—कारणाद्भिन्नसत्ताकत्वाभावः कार्यस्य प्रसिद्धः । ततो ब्रह्मण एव विश्वकारणत्वे प्रतिपादितेऽद्वयत्वं स्फुटं भवति । यतः सर्वत्र कार्ये कारणानुगमः प्रसिद्धः, तेन सद्रूपं गगने स्थितम्, गगनादिकं चोत्तरोत्तरत्रेति । अपरं त्वत्र कार्ये या कारणस्थितिः सा तादात्म्यसंबन्धेन—भेदसहिष्णुरभेदः इतिलक्षितेन बोध्या । अत्र भेदस्तु कल्पितः । परिणामिनः कारणस्य गुणाः कार्ये दृश्यन्ते—इति नियमेन यदि ज्ञानमात्मनो गुणोऽभविष्यत्, तदा भूतेषु दृष्टमभविष्यत्; परंतु तत् स्वरूपमेवात्मनः, न गुणः, अतो न दृश्यते । तदभावादात्मनो विवर्तोपादानतैव ज्ञायते । विवर्तोपादानता तु मायाशबलाख्येन कल्पितेनैव रूपेण भवति । अत्र श्रुतिः प्रदर्शनार्थत्वेनाऽऽकाशादिकां कियतीमपि सृष्टिमुदाजहार । साकल्येन त्वभिधानमशक्यमनुपयुक्तं च । ब्रह्मावबोधद्वारत्वेन तदभिधानम् । 'फलवत्सन्निधावफलं तदङ्गम्'—(शवरभाष्ये ४.४.१९.) इति न्यायेनात्र सृष्टिकथनमद्वयत्वबोधद्वारत्वं भजते । तच्च द्वारत्वमल्पाभिधानेऽपि संपद्यते । द्वारत्वेनोपयोगो गौडपादाचार्यैरुदाहृतः—"मृल्लोहविस्फुलिङ्गाद्यैः सृष्टिर्या चोदितान्यथा । उपायः सोऽवताराय नास्ति भेदः कथंचन" ।। (मां. उ. कारिका. ३. १५.) इति । नहि सृष्टिरुपास्यत्वेन, ज्ञेयत्वेन वा स्वतन्त्रपुरुषार्थाय कल्पते । सृष्टिमुपासीत, सृष्टिविच्छ्रेयः प्राप्नोति—इत्येवंवचनाभावात् । अत एव श्रुतिस्मृतिपुराणागमेषु परस्पराविरोधेन बहुधा कथ्यमाना सृष्टिः सर्वापि वार्तिककारैरङ्गीकृता—"यया यया भवेत्पुंसां व्युत्पत्तिः प्रत्यगात्मनि । सा सैव प्रक्रियेह स्यात्साध्वी

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

णः—आत्मन आत्मशब्दवाच्यात्, आत्मा हि तत्सर्वस्य, "तत्सत्यं स आत्मा"-इति श्रुत्यन्तरात्, अतो ब्रह्माऽऽत्मा।

तस्मादेतस्माद्ब्रह्मणः—आत्मस्वरूपात्—आकाशः संभूतः समुत्पन्नः। आकाशो नाम शब्दगुणः, अवकाशकरो मूर्तद्रव्याणाम्। तस्मादाकाशात्—स्वेन स्पर्शगुणेन पूर्वेण च कारणगुणेन शब्देन—द्विगुणो वायुः—'संभूतः'—इत्यनुवर्तते। वायोश्च—स्वेन रूपगुणेन पूर्वाभ्यां च--त्रिगुणोऽग्निः संभूतः। अग्नेश्च—स्वेन रसगुणेन पूर्वैश्च त्रिभिः—चतुर्गुणा आपः संभूताः। अद्भ्यः—स्वेन गन्धगुणेन पूर्वैश्च चतुर्भिः—पञ्चगुणा पृथिवी संभूता।

भूतसृष्टिः

परमात्मनः सर्वत्रोपादानत्वात्। आकाशभावापन्नात्परमात्मन एव वायुः संभूतः, अत एव

सा चानवस्थिता" ॥ बृ. उ. वार्तिके १. ४. ४०२. इदमेवं समुपबृंहितं ब्रह्मगीतासु (३. ३४) ब्रह्मरूपात्मनस्तस्मादेतस्माच्छक्तिमिश्रितात्। अपञ्चीकृत आकाशः संभूतो रज्जुसर्पवत्॥ "......असङ्गोदासीनस्य परमार्थतो निरविद्यस्य स्रष्टृत्वासंभव इत्यभिप्रेत्य तत्संभावनायाऽऽह—शक्तिमिश्रितादिति। प्राणिकर्मपरिपाकवशेन सिसृक्षितकार्यप्रपञ्चोन्मुखात्तत्स्वरूपपरिकल्पितत्वेन तदाश्रिता मायाशक्तिः, तन्मिश्रितात्तदुपाधिकादित्यर्थः। एवं मायाशक्तिबलाद्ब्रह्मरूपादात्मनः सकाशादपञ्चीकृतः सूक्ष्मशब्दगुणोऽवकाशात्मक आकाशः संभूतः समुत्पन्नः।...... निमित्तकारणवाचिशब्दादपि पञ्चमी भवति—हेतौ विधानात्। तथोपादानकारणवाचिशब्दादपि "जनिकर्तुः प्रकृतिः" (पा. सू. १. ४. ३०) इति स्मरणात्। एवं चात्र तस्मादिति पञ्चमी तदुभयरूपा तन्त्रेणोपात्ता द्रष्टव्या। ब्रह्मैव कार्यस्य जगतो निमित्तमुपादानं च। "सोऽकामयत बहु स्यां प्रजायेय" (तै. उ. २-६.) इति कामयितृत्वेन स्वस्यैव बहुभावेन चाभिन्ननिमित्तोपादानस्याग्रे प्रतिपादितत्वात्। बादरायणोऽपि ब्रह्मण उभयरूपत्वं सूत्रयामास—"प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्" (ब्र. सू. १.४. २३.) इति। ये त्वस्पर्शद्रव्यत्वादात्मवदाकाशस्य नित्यत्वं मन्यमानाः 'संभूत' इत्यभिव्यक्तिपरतयोक्तमर्थमन्यथयन्ति, ते बादरायणेनैव "न वियदश्रुतेः" (ब्र. सू. २. ३. १. ७) इत्यधिकरणे निराकृताः। ननु वियदादिकार्यप्रपञ्चेनैव वस्तुना ब्रह्मणः परिच्छेदः स्यात्; तथा ब्रह्मोपादानं सत् क्षीरदधिन्यायेन जगदाकारेण परिणमते, अथवा मृद्घटन्यायेन जगदारभते—इत्यनयोरन्यतरदङ्गीकर्तव्यम्। तथाच ब्रह्मणोऽनित्यत्वादिप्रसक्तिरित्याशंक्याऽऽह—रज्जुसर्पवदिति। न खल्वत्रारम्भवादः, परिणामवादो वा विवक्षितः, येनैवं प्रसज्येत; अपितु विवर्तवाद एव विवक्षितः। यथा रज्जुः स्वयमविकृतैव सती मायया सर्पाकारेण विवर्तते, एवं ब्रह्मापि निर्विकारमेव सत् स्वमायाशक्तिविलासेन वियदादिजगदाकारेण विवर्तते। कारणस्वरूपाविरोधेन कार्यप्रतिभासो विवर्तः। अतो ब्रह्मणो निर्विकारत्वाविघातान्नानित्यत्वप्रसक्तिरित्यर्थः। अयमेवार्थो बादरायणेनापि "कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा" (ब्र. सू. २. १. २६.) इत्यत्र निर्णीतः। एवं ब्रह्माकारस्य वियदादिभूतभौतिकप्रपञ्चस्याधिष्ठाने ब्रह्मणि कारणे मायापरिकल्पितत्वेन रज्जुसर्पवदेवाधिष्ठानादव्यतिरिक्तत्वम्। यथा च मृत्कार्यं घटशरावोदञ्चनादिकं कारणभूतमृव्यतिरेकेणालब्धसत्ताकत्वात् पृथुबुध्नोदराकारादिरूपविशेषस्य तद्वाचकघटादिशब्दस्य च वाचारम्भणमात्रत्वात् कारणमृन्मात्रमेव, न तु ततोऽन्यत्। एवं ब्रह्मकार्यस्यापि कारणानन्यत्वाद्ब्रह्मणस्तत्कृतपरिच्छेदो न शंकनीय इत्यर्थः"—तात्पर्यदीपिका।

१) छां. उ. ६. ८. ७. (२) आकाशरूपापन्नाद्ब्रह्मणः (३) आकाशगु°–पाठः (४) वायुरूपापन्नाद्ब्रह्मणः; एवमग्रेऽप्यूह्यम्। परमात्मैवाकाशवाय्वाद्याकारेण प्रतिभासत इत्यर्थः।

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

अन्नमयकोशः स वा एष पुरुषोऽन्नरसमयः ।

भोक्तृभौतिकप्रपञ्चसृष्टिः पृथिव्यां ओषधयः । ओषधीभ्योऽन्नम् । अन्नाद्रेतोरूपेण परिणतात्पुरुषः शिरःपाण्याद्याकृतिमान् ॥

स वा एष पुरुषोऽन्नरसमयोऽन्नरसविकारः । पुरुषाकृतिभावितं हि सर्वेभ्योऽङ्गेभ्यस्तेजःसंभूतं रेतो बीजं, तस्माद्यो जायते, सोऽपि तथा पुरुषाकृतिरेव स्यात्–सर्वजातिषु जायमानानां जनकाकृतिनियमदर्शनात् ।

सर्वेषामप्यन्नरसविकारत्वे, ब्रह्मवंश्यत्वे चाविशिष्टे, कस्मात्पुरुष एव गृह्यते ?

शास्त्राधिकारित्वात् पुरुषग्रहणम् प्राधान्यात् । किं पुनः प्राधान्यम् ? कर्मज्ञानाधिकारः—पुरुष एव हि शक्तत्वादर्थित्वादपर्युदस्तत्वाच्च कर्मज्ञानयोरधिक्रियते—"पुरुषे त्वेवाऽऽविस्तरामात्मा, स हि प्रज्ञानेन संपन्नतमो विज्ञातं

प्राणभृदुपाधिषु तारतम्यम् वदति, विज्ञातं पश्यति, वेद श्वस्तनं, वेद लोकालोकौ, मर्त्येनामृतमीप्सत्येवं संपन्नः; अथेतरेषां पशूनामशनापिपासे एवाभिविज्ञानम् "—इत्यादिश्रुत्यन्तरदर्शनात् ।

---

तद्गुणस्योत्तरत्रानुवृत्तिः; गुणशब्दप्रयोगोऽपि भेदकल्पनया तत्तन्त्रत्वाभिप्रायेण, न वैशेषिकपक्षवत्तत्त्वभेदाभिप्रायेण, तत्त्वतो भेदे प्रमाणाभावात्–इति द्रष्टव्यम् ॥

पुरुषग्रहणस्य तात्पर्यमाह–सर्वेषामपीति । 'शक्तत्वात्' इति—विधिनिषेधविवेकसामर्थ्योपेतत्वादिति–-उक्तं, तत्रैतरेयकश्रुतिसंमतिमाह–-पुरुषे त्वेवेति । ब्राह्मण्यादिजातिमति मनुष्यादिदेह आविस्तरामतिशयेन प्रकट आत्मा ज्ञानातिशयदर्शनादित्यर्थः । मर्त्येन ज्ञानकर्मादिसाधनेनाक्षयफलं प्राप्तुमिच्छतीत्यर्थः । येन विवेकज्ञानेन पुरुषस्य प्राधान्यं विवक्षितं तत्पश्वादीनां नास्तीत्याह—अथेतरेषामिति ।

---

(१) 'पृथिव्या ओषधयः' इत्योषधीनां पञ्चीकृतपृथ्वीकार्यत्वश्रवणात्पञ्चीकृतमहाभूतोत्पत्तेरिहोक्तत्वेन पञ्चीकृतमहाभूतशरीरत्वाद्विराजस्तदुत्पत्त्यैवोत्पत्तिः सिद्धा । अपि च विराजः सूत्रकार्यत्वात्कारणस्यापि सूत्रस्योत्पत्तिरिहाभिप्रेता । (२) 'यो वेद निहितं गुहायाम्' इत्युक्तं गुहानिहितत्वं समर्थयितुमन्नमयादिभ्य आनन्दमयान्तेभ्यः पञ्चभ्यः कोशेभ्यो ब्रह्मतत्त्वं विवेक्तुकाम आदावन्नमयकोशं दर्शयति—" स वा एषः "—इत्यादि । (३) ऐ. आ. २. ३. २. " न विज्ञातं वदन्ति, न विज्ञातं पश्यन्ति, न विदुः श्वस्तनं न लोकालोकौ, त एतावन्तो भवन्ति—यथाप्रज्ञं हि संभवाः " । इति वाक्यशेषः । लोकालोकौ–स्वर्गनरलोकौ । तात्कालिकक्षुधादिज्ञानोपेता गवाश्वादिपशवो भवन्ति, यतो ज्ञानकर्मानुसारेण जीवानां जन्मानि । एतदेवाभिप्रेत्य परलोकगामिनं जीवं प्रति वाजसनेयिन आमनन्ति—" तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च " ( बृ. उ. ४. ४. २. ) इति । " पुण्यो वै पुण्येन कर्मणा भवति, पापः पापेन " ( बृ. उ. ४. ४. ५ ) इति च । तदेवं मनुष्यदेहस्योत्तमोपाधित्वात्तस्मिन्नेवाऽऽत्मन आविर्भावातिशयः

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

तस्योपासनीय आकारः

तस्येदमेव शिरः । अयं दक्षिणः पक्षः । अयमुत्तरः पक्षः । अयमात्मा । इदं पुच्छं प्रतिष्ठा । तदप्येष श्लोको भवति ॥

॥ इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि ब्रह्म—आनन्द—वल्ल्यां प्रथमोऽनुवाकः ॥ १ ॥

---

स हि पुरुष इह विद्ययाऽन्तरतमं ब्रह्म संक्रामयितुमिष्टः, तस्य च बाह्याकारविशेषेष्वनात्मस्वात्मभाविता बुद्धिः, अनालम्ब्य विशेषं कंचित्, सहसाऽऽन्तरतमप्रत्यगात्मविषया निरालम्बना च कर्तुमशक्या, इति दृष्टशरीरात्मसामान्यकल्पनया शाखाचन्द्रनिदर्शनवदन्तः प्रवेशयन्नाह —तस्येदमेव शिरः । 'तस्य' अस्य पुरुषस्यान्नरसमयस्य 'इदमेव शिरः' प्रसिद्धम् । प्राणमयादिष्वशिरसां शिरस्त्वदर्शनादिहापि तत्प्रसङ्गो मा भूदिति—इदमेव शिर इत्युच्यते । एवं पक्षादिषु योजना । अयं दक्षिणो बाहुः पूर्वाभिमुखस्य दक्षिणः पक्षः । अयं सव्यो बाहुरुत्तरः पक्षः । अयं मध्यमो देहभाग आत्माऽङ्गानाम्—"मध्यं ह्येषामङ्गानामात्मा" इति श्रुतेः। इदमिति नाभेरधस्ताद्यदङ्गं, तत्पुच्छं प्रतिष्ठा । प्रतितिष्ठत्यनयेति 'प्रतिष्ठा' । पुच्छमिव 'पुच्छं' अधोलम्बनसामान्यात्, यथा गोः पुच्छम् । एतत्प्रकृत्योत्तरेषां प्राणमयादीनां रूपकत्वसिद्धिः, मूषानिषिक्तद्रुतताम्रप्रतिमावत्। तदप्येष श्लोको भवति । 'तत्' तस्मिन्नेवार्थे ब्राह्मणोक्तेऽन्नमयात्मप्रकाशक एष श्लोको मन्त्रो भवति ।

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवतः कृतौ तैत्तिरीयोपनिषदि ब्रह्म—आनन्द—वल्लीभाष्ये प्रथमोऽनुवाकः ॥ १ ॥

---

कोशपञ्चकोपन्यासस्य तात्पर्यमाह—स हीत्यादिना । 'पक्ष' 'पुच्छ' शब्दप्रयोगात्सुपर्णाकारक्लृप्तिं दर्शयति—उत्तरत्र तत्कल्पनया बाह्यविषयासङ्गव्यपोहेन बुद्धेरात्मनि स्थिरीकरणार्थं, नोपासनविधानमिह विवक्षितम् । उपक्रमोपसंहारयोर्ब्रह्मात्मैकत्वप्रतिपादनेनैवोप-

---

(१) अस्यान्नमयस्य स्थूलदेहात्मकस्य पक्षिण उपासितव्यस्य श्येनकंकादिपक्ष्याकारेण चीयमानस्याग्नेरिव । (२) ऐ. आ. २.३. ५. (३) अत्र भाष्ये, टीकायां च वैदिकपाठानुसारिमूलानुवाकसमाप्तिर्ग्रथिता । एवमेव पुरतोऽपि ब्रह्म—आनन्द-वल्लीसमाप्तिपर्यन्तं ज्ञेयम् । 'प्रथमोऽनुवाकः' इत्यत्र 'प्रथमः खण्डः' इति पाठान्तरम्; एवमेव समाप्तिपर्यंतं यथायोग्यमूह्यम् । (४) "तत्र तावज्जीवभावेनावस्थितस्य त्रीणि शरीराणि भवन्ति स्थूलसूक्ष्मकारणात्मना । तत्रान्नरसपरिणामरूपं षाट्कौशिकं ( त्वगसृङ्मांसमेदोऽस्थिमज्जेति ) स्थूलशरीरं,

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

क्षयात्, मध्ये ग्रन्थस्योपासनविधौ तात्पर्ये च वाक्यभेदप्रसङ्गात्; अत एव 'अङ्गेषु स्तुतिः परार्थत्वात्'—इतिन्यायेन यथा प्रयाजादिषु फलश्रवणमर्थवादः, तथाऽन्नमयादिप्रतिपत्तेरपि फलश्रवणमर्थवाद एव—तत्तद्बुद्धिस्थिरीकारस्य पूर्वपूर्वबुद्धिप्रविलापनेनाऽऽत्मनः प्रतिपत्तिशेषत्वात्—इति द्रष्टव्यम् ।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दज्ञानविरचिते तैत्तिरीयोपनिषच्छांकरभाष्यटिप्पणे ब्रह्म—आनन्द—वल्ल्यां प्रथमोऽनुवाकः ॥ १ ॥

---

तत्तादात्म्यापन्नोऽन्नमय आत्मा भवति । ' स वा एष पुरुषोऽन्नरसमयः ' इति श्रुतौ तच्छब्देन प्रकृतमात्मानं परामृश्य तस्यान्नमयत्वप्रतिपादनात् । एवं प्राणादिवक्ष्यमाणकोशतादात्म्येन प्राणमयादित्वमपि तस्यात्मनोऽधिगन्तव्यम् । तस्य चान्नपरिणामरूपस्य स्थूलशरीरस्याऽऽत्मत्वोपदेशेन स्वशरीरादन्यस्य पुत्रमित्रकलत्रादेरात्मत्वभ्रमो निवर्तितः । तस्य मध्येऽपि सूक्ष्मभूतारब्धं यत्सप्तदशकं लिङ्गं, तदात्मनः सूक्ष्मशरीरम्, तदुभयस्य हेतुभूता या मलिनसत्त्वप्रधानाऽविद्या सुषुप्ताववभासते, सा तस्यात्मनः कारणशरीरम् । तत्र सूक्ष्मशरीरे प्राणमयमनोमयविज्ञानमयाख्यकोशत्रयान्तर्भावः । आनन्दमयस्तु कारणशरीरमिति विवेकः ।"

—तात्पर्यदीपिका ।

अन्नरसमयशब्देन न प्रसिद्धमेव शरीरं ग्राह्यम्, किन्तु विराडात्मापि । " येऽन्नं ब्रह्मोपासते " इत्यत्र ध्यानोपदेशाच्छिरआदिकल्पनायाश्च ध्यानार्थत्वाद्विराड्देवताऽत्र ग्रहीतव्या । पञ्चविधकोशानां चित्यात्मकानां नैरन्तर्येणानुसन्धानाद्बुद्धिशुद्ध्यतिशये विवेकबुद्धिर्भवति । तद्बलाच्च पूर्वं पूर्वं कोशमपहायोत्तरमुत्तरं प्रतिपद्यते । तदेवं सर्वानपि कोशान् प्रविलाप्य " अहं ब्रह्मास्मि " इति ज्ञानान्मोक्षमधिगच्छति । ' सर्वान्नप्राप्तिः, ' बुद्धिशुद्धिः '—इतिफलद्वयमुपासनस्य श्रुतिसिद्धत्वादविरुद्धम् ।

(१) "उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् । अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये" ॥ इत्यखिलवेदान्तानां ब्रह्मात्मैकत्वनिश्चायकानि षड्विधानि लिङ्गानि । अत्र तैत्तिरीयके—" ब्रह्मविदाप्नोति परम् " ( २. १.) इत्युपक्रमः; " आनन्दो ब्रह्मेति व्यजानात् " ( ३. ६. ) इत्युपसंहारः; " स यश्चायं " ( २. ८. ) इत्यभ्यासः; " यो वेद निहितं गुहायां " ( २. १. ) इत्यपूर्वतासूचनम्; " अभयं प्रतिष्ठां विन्दते, अथ सोऽभयं गतो भवति " ( २. ७. ) इति फलश्रुतिः; " सोऽकामयत " ( २. ६. ) इत्याद्यर्थवादः; " असन्नेव स भवति । असद्ब्रह्मेति वेद चेत् " ( २.६. ) इति, " को ह्येवान्यात् ? कः प्राण्यात् " ? इत्युपपत्तिः ।
(२) जै. सू. ४. ३. १९ (३) ' समिधो यजति ', ' तनूनपातं यजति ', ' इडो यजति ', 'बर्हिर्यजति', ' स्वाहाकारं यजति '—इति विहिता पञ्च प्रयाजाहुतयः । यस्मात् ' ऋतवः हेमन्तशिशिरयोरैक्येन 'पञ्च', अतस्तदात्मका अपि प्रयाजाः पञ्च–(शत. ब्रा. १. ४. ४. १; तै. सं. २. ६. १. १—५; तन्मन्त्राः तै. ब्रा. ३. ५. ५. द्रष्टव्याः) अफलस्य हि प्रयाजादेः कैमर्थक्यवशात् " फलवत्संनिधावफलं तदङ्गम् " ( शबरभाष्ये ४. ४. १९. ) इति न्यायेन फलवदाग्नेयादियागशेषत्वं दृश्यते । यत्प्रयाजादिविधिवाक्यशेषेण " वर्म वा एतद्यज्ञस्य क्रियते " इति फलं श्रुतं, तस्य " अङ्गेषु स्तुतिः परार्थत्वात् " इति न्यायेनार्थवादत्वम् । प्रयाजादेर्हि दर्शपूर्णमासप्रकरणपठितत्वेनाङ्गाङ्गिभावस्य निर्णीतत्वात्, युक्तं तदीयफलश्रवणस्यार्थवादत्वम्–( जै. न्या. मा. वि. ३. ३. ११; ४. ३. १–३. इत्यादौ ).

सूत्रव्याख्यानरूपायामृच्यनन्तामितीरितम् । तदानन्त्यप्रसिध्यर्थं जगत्कारणतोच्यते ॥ ३० ॥
यत्सत्यं ब्रह्म कोशाख्यगुहायां व्योमनामके । अज्ञाने कारणे गूढं तस्मादाकाश उद्गतः ॥ ३१ ॥



CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

## अथ द्वितीयोऽनुवाकः

अन्नमये श्लोकः

अन्नाद्वै प्रजाः प्रजायन्ते । याः काश्च पृथिवीꣳ श्रिताः । अथो अन्नेनैव जीवन्ति । अथैनदपि यन्त्यन्ततः । अन्नꣳ हि भूतानां ज्येष्ठम् । तस्मात् सर्वौषधमुच्यते । सर्वं वै तेऽन्नमाप्नुवन्ति । येऽन्नं ब्रह्मोपासते । अन्नꣳ हि भूतानां ज्येष्ठम् । तस्मा-त्सर्वौषधमुच्यते । अन्नाद्भूतानि जायन्ते । जा-तान्यन्नेन वर्धन्ते । अद्यतेऽत्ति च भूतानि । त-स्मादन्नं तदुच्यत इति ॥

अन्नाद्रसादिभावपरिणतात्—वै इति स्मरणार्थः—प्रजाः स्थावरजङ्गमात्मकाः प्रजायन्ते । याः काश्चाविशिष्टाः पृथिवीं श्रिताः पृथिवीमाश्रिताः, ताः सर्वा अन्नादेव प्रजायन्ते । अथो अपि जाता अन्नेनैव जीवन्ति प्राणान्धारयन्ति—व-र्धन्त—इत्यर्थः । अथ अपि एनत् अन्नं अपियन्ति अपिगच्छन्ति—'अपि' शब्दः प्रतिशब्दार्थे—अन्नं प्रति प्रलीयन्त इत्यर्थः, अन्ततोऽन्ते—जीवनलक्ष-णाया वृद्धेः परिसमाप्तौ । कस्मात् ? अन्नं हि यस्माद्भूतानां प्राणिनां ज्येष्ठं

---

एवं वाय्वग्निजलोर्व्योषध्यन्नदेहेषु कारणम् । पूर्वं पूर्वं भवेत्कार्यं परं परमितीक्ष्यताम् ॥ ३२ ॥
इन्द्रो मायाभिरभवद्बहुरूप इति श्रुतेः । आसन्मायिकरूपाणि खादीनि ब्रह्मगानि हि ॥ ३३ ॥
परास्य शक्तिर्विविधैत्येवं श्रुत्यंतरेरणात् । विविधा ब्रह्मणः शक्तिः सा च मायानृतत्वतः ॥ ३४ ॥
सत्यस्य ब्रह्मरूपत्वाच्छक्तेरनृततोचिता । निस्तत्त्वा भासते याऽसौ माया स्यादिन्द्रजालवत् ॥ ३५ ॥
मायाया विविधत्वेन तस्याः कार्येषु खादिषु । नामरूपेष्वनेकत्वं भात्यन्योन्यविलक्षणम् ॥ ३६ ॥
भाति सर्वेषु सत्यत्वमेकं यद्ब्रह्मगं हि तत् । सर्वाधिष्ठानधर्मत्वात् तत्सर्वत्रानुगच्छति ॥ ३७ ॥
सर्पधारादण्डमाला रज्ज्वां याः परिकल्पिताः । एतासु रज्जुगं दैर्घ्यं सर्वास्वनुगतं यथा ॥ ३८ ॥
व्योमाद्या देहपर्यन्ताः सत्ये ब्रह्मणि कल्पिताः । सर्वेष्वनुगतं ब्रह्म सत्यत्वं तस्य सुस्थितम् ॥ ३९ ॥
अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते । इति न्यायेन देहान्त आरोपः खादिरीरितः ॥ ४० ॥

—तैत्तिरीयकविद्याप्रकाशः

(१) पूर्वं सूत्रोक्तेऽर्थे (पृ. ४७.) काचिदृगुदाहृता, तत्समुच्चयमभिप्रेत्यात्र 'अपि' शब्दः प्रयुक्तः । चतु-र्दशभिः पादैरुपेतोऽयं श्लोकः । ईदृशस्य लोकप्रसिद्धस्य च्छन्दोविशेषस्याभावेऽपि वैदिकं किंचिदतिच्छन्दो भविष्यति । (२) °जंगमाः—पाठः । (३) वृत्तेः—पाठः ।

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

प्राणमयकोशः

**तस्माद्वा एतस्मादन्नरसमयात् । अन्योऽन्तर आत्मा प्राणमयः । तेनैष पूर्णः ।**

प्रथमजम्—अन्नमयादीनां हीतरेषां भूतानां कारणमन्नम्, अतोऽन्नप्रभवाः, अन्नजीवनाः, अन्नप्रलयाश्च सर्वाः प्रजाः—यस्माच्चैवं, तस्मात्सर्वौषधं सर्वप्राणिनां देहदाहप्रशमनमन्नमुच्यते ।

अन्नब्रह्मविदः फलमुच्यते—सर्वं वै ते समस्तमन्नजातमाप्नुवन्ति । के? येऽन्नं ब्रह्म यथोक्तमुपासते । कथम्? अन्नजोऽन्नात्माऽन्नप्रलयोऽहम्, तस्मादन्नं ब्रह्मेति । कुतः पुनः सर्वान्नप्राप्तिफलमन्नात्मोपासनमिति? उच्यते—अन्नं हि भूतानां ज्येष्ठम्—भूतेभ्यः पूर्वं निष्पन्नत्वाज्ज्येष्ठं हि यस्मात्, तस्मात्सर्वौषधमुच्यते—तस्मादुपपन्ना सर्वान्नात्मोपासकस्य सर्वान्नप्राप्तिः । "अन्नाद्भूतानि जायन्ते, जातान्यन्नेन वर्धन्ते"—इत्युपसंहारार्थं पुनर्वचनम् । इदानीं 'अन्न' निर्वचनमुच्यते—अद्यते—भुज्यते चैव यद्भूतैः, अन्नमत्ति च भूतानि स्वयं, तस्माद् भूतैर्भुज्यमानत्वाद् भूतभोक्तृत्वाच्च 'अन्नं' तदुच्यते । इतिशब्दः प्रथमकोशपरिसमाप्त्यर्थः ॥

अन्नमयादिभ्य आनन्दमयान्तेभ्य आत्मभ्योऽभ्यन्तरतमं ब्रह्म विद्यया प्रत्यगा-

---

(१) सकलप्रजोत्पादादिहेतुत्वादन्नं (विराट्) समष्ट्यात्मकं प्रथमोत्पन्नमुच्यते, तदन्नं विराडात्मकं ये दीर्घकालमादरनैरन्तर्याभ्यामहंग्रहेण ध्यायन्ति, ते विराडात्मरूपेण सर्वमेवाध्यात्मिकमन्नमाप्नुवन्ति । दृष्टं हि सर्वं कार्यं कारणेन व्याप्तम्, प्रकृते चान्न–अत्तृरूपेण विराजा सर्वमन्नं यतो व्याप्यते, ततश्चान्नोपासकस्य विराडात्मरूपेण सर्वान्नभक्षणं संभवति । (२) उष्यति दहतीति 'ओषः' । अन्नालाभे जाठराग्निर्धातूनेव दहति, तस्याग्नेरन्नेन धानात्–पानात्–उपशमनात्तृप्तिसाधनादन्नमौषधम् । (३) व्यष्टिरूपेणाद्यते, समष्टिरूपेणात्ति च भूतानीति द्विविधान्नपदव्युत्पत्तिः ।

अथापवादो जगतः कथ्यते ब्रह्मबुद्धये । तत्रादौ पुत्रमित्रादिनुत्त्यै देहात्मतोच्यते ॥ ४१ ॥
आत्मा वै पुत्रनामासीत्येवमात्मत्वविभ्रमः । लौकिको नुद्यते पुत्रे श्रुत्या युक्तिश्च विद्यते ॥ ४२ ॥
साकल्यं पुत्रभार्यादेर्वैकल्यं चात्मनीक्ष्यते । इत्याह भाष्यकृत्तेन पुत्रेऽरित स्वात्मताभ्रमः ॥ ४३ ॥
सोऽस्यायमात्मा पुण्येभ्यः प्रतिधीयत इत्यदः । वचो वक्त्यैतरेयोऽतः स्वात्मताभ्रम एव हि ॥ ४४ ॥
एवं व्युदसितुं देहस्यैवात्मत्वमिहोच्यते । यो देहोऽन्नमयः सोऽयमेवात्मान्यो न कश्चन ॥ ४५ ॥
मदीयः पुत्रभार्यादिरिति भेदावभासनात् । गौणी स्यादात्मता पुत्रे भृत्यादौ सिंहता यथा ॥ ४६ ॥
पूर्ववासनाया पुत्रे स्वात्मता भाति चेत्पुनः । तद्वासनापनुत्त्यर्थं देहात्मत्वमुपास्यताम् ॥ ४७ ॥
शिरः पक्षौ मध्यपुच्छे इति देहस्य पाक्षिताम् । ध्यात्वा तन्निष्ठतां प्राप्य त्यजेत्पुत्रात्मताभ्रान्तिम् ॥ ४८ ॥
धीर्मनुष्योऽहमित्यास्ति पुत्रोऽहमिति नास्ति धीः । विकारोऽस्ति परिव्राजो न पुत्रसुखदुःखयोः ॥ ४९ ॥
अन्नजो देह एवात्मा तदन्नं ब्रह्मबुद्धितः । उपास्य सर्वमप्यन्नं स्वाभीष्टं लभते पुमान् ॥ ५० ॥

—तैत्तिरीयकविद्याप्रकाशः

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

तस्योपास्यरूपम् स वा एष पुरुषविंध एव । तस्य पुरुंषविध-
ताम् । अन्वयं पुरुषविधः । तस्य प्राणं एव
शिरः । व्यानो दक्षिणः पक्षः । अपान
उत्तरः पक्षः । आकाश आत्मा । पृथिवी
पुच्छं प्रतिष्ठा ।

तदप्येष श्लोको भवति ।

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि ब्रह्म—आनन्द—वल्ल्यां
द्वितीयोऽनुवाकः ॥ २ ॥

---

त्मत्वेन दिदर्शयिषु शास्त्रमविद्याकृतपञ्चकोशापनयनेनानेकतुषकोद्रवावितुषी-
करणेनेव तदन्तर्गततण्डुलान्प्रस्तौति—तस्माद्वा एतस्मादन्नरसमयादित्यादि ।

'तस्मादेतस्मात्' यथोक्तात् 'अन्नरसमयात्' पिण्डादन्यो व्यतिरिक्तो-
ऽन्तरोऽभ्यन्तर आत्मा पिण्डवदेव मिथ्यापरिकल्पित आत्मत्वेन प्राणमयः, प्राणो
वायुः—तन्मयस्तत्प्रायः । तेन प्राणमयेनैषोऽन्नरसमय आत्मा पूर्णो वायुनेव दृतिः ।

स वा एष प्राणमय आत्मा पुरुषविध एव पुरुषाकार एव शिरःपक्षादिभिः ।
किं स्वत एव ? नेत्याह—प्रसिद्धं तावदन्नरसमयस्याऽऽत्मनः पुरुषविधत्वम्,
तस्यान्नरसमयस्य पुरुषविधतां पुरुषाकारताम् अनु अयं प्राणमयः पुरुषविधो
मूषानिषिक्तप्रतिमावत्, न स्वत एव । एवं पूर्वस्य पूर्वस्य पुरुषविधताम-
नूत्तरोत्तरः पुरुषविधो भवति; पूर्वः पूर्वश्चोत्तरोत्तरेण पूर्णः ।

कथं पुनः पुरुषविधताऽस्येति ? उच्यते—तस्य प्राणमयस्य प्राण एव
शिरः । प्राणमयस्य वायुविकारस्य 'प्राणः' मुखनासिकानिःसरणो वृत्तिविशेषः

---

(१) सत्त्वरजस्तमोगुणात्मकमायाकार्यत्वाद्भूतान्यपि गुणत्रयात्मकानि । तत्र वियदादिसूक्ष्मभूतानां ये एव रजोंशाः, तैरारब्धानि वाक्पाणिपादादीनि पञ्च कर्मेन्द्रियाणि । तद्रजोंशसमुदायारब्धः प्राणनादिक्रियाहेतुः क्रियाशक्त्यात्मकः प्राणः—लिङ्गशरीरे ज्ञानशक्तिः, क्रियाशक्तिश्चेति द्वयं वर्तते; तयोर्मध्ये क्रियाशक्तिकार्यभूतः प्राणाख्यः पदार्थः । तस्य प्राणापानाद्याः पञ्च वृत्तयः—व्यापारविशेषाः । एवं पञ्चप्राणकर्मेन्द्रियरूपप्राणमयकोशविशिष्टस्यात्मनं उपदेशेन बाह्यस्यानात्मत्वं प्रतिपादयति श्रुतिः—"तस्माद्वै" इति । प्राणमयस्यात्मन्यारोपितत्वादहं प्राणिमीत्येवमुच्छ्वासादिकर्तृत्वेनाहंप्रत्ययगम्यत्वाच्चात्मत्वं द्रष्टव्यम् । आत्मत्वं नाम प्रत्यक्स्वरूपत्वम् । यतः कारणादयमान्तरो देहमध्ये वर्तमानोऽनुभूयते, अतो बाह्याद्देहात्प्राणमय आत्मा विवेकेन प्रत्येतव्यः । अत एवासिकोशवद्बहिराच्छादकत्वसामान्यादन्नविकारस्य देहस्य कोशत्वम्; एवमुत्तरत्रापि मनोमयाद्यात्मोपदेशेन पूर्वस्य पूर्वस्य बाह्यतया विविक्तत्वेनात्मत्वभ्रमनिरासात्कोशरूपत्वमवगन्तव्यम् ।

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

## अथ तृतीयोऽनुवाकः

प्राणमये श्लोकः

प्राणं देवा अनु प्राणन्ति । मनुष्याः पशवश्च ये ।
प्राणो हि भूतानामायुः । तस्मात्सर्वायुषमु-
च्यते । सर्वमेव त आयुर्यन्ति । ये प्राणं ब्रह्मो-
पासते । प्राणो हि भूतानामायुः । तस्मात्सर्वा-
युषमुच्यत इति ।

'शिरः' इति कल्प्यते, वचनात् । सर्वत्र वचनादेव पक्षादिकल्पना । व्यानो व्यानवृत्तिर्दक्षिणः पक्षः। अपान उत्तरः पक्षः । आकाश आत्मा, य आकाशस्थो वृत्तिविशेषः समानाख्यः, स आत्मेवाऽऽत्मा—प्राणवृत्त्यधिकारात्, मध्यस्थत्वा-दितराः पर्यन्ता वृत्तीरपेक्ष्याऽऽत्मा—"मध्यं ह्येषामङ्गानामात्मा" इतिश्रुतिप्रसिद्धं मध्यस्थस्याऽऽत्मत्वम् । पृथिवी पुच्छं प्रतिष्ठा । 'पृथिवी' इति पृथिवी-देवताऽऽध्यात्मिकस्य प्राणस्य धारयित्री स्थितिहेतुत्वात् । "सैषा पुरुषस्यापा-नमवष्टभ्य" इति हि श्रुत्यन्तरम् । अन्यथोदानवृत्त्योर्ध्वगमनं, गुरुत्वात्पतनं वा स्याच्छरीरस्य, तस्मात्पृथिवी देवता पुच्छं प्रतिष्ठा प्राणमयस्याऽऽत्मनः । तत् तस्मिन्नेवार्थे प्राणमयात्मविषय एष श्लोको भवति ।

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवतः कृतौ तैत्तिरीयोपनिषदि ब्रह्म—आनन्द—वल्लीभाष्ये द्वितीयोऽनुवाकः ॥ २ ॥

---

प्राणं देवा अनु प्राणन्ति—(१) 'देवा' अग्न्यादयः 'प्राणं' वाय्वात्मानं—प्राणनशक्तिमन्तम् 'अनु' तदात्मभूताः सन्तः प्राणन्ति प्राणनकर्म कुर्वन्ति—प्राणनक्रियया क्रियावन्तो भवन्ति । (२) अध्यात्माधिकारात् 'देवा' इन्द्रियाणि 'प्राणमनु प्राण-

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दज्ञानविरचिते तैत्तिरीयोपनिषच्छांकर-भाष्यटिप्पणे ब्रह्म—आनन्द—वल्ल्यां द्वितीयोऽनुवाकः ॥ २ ॥

---

पूर्वपूर्वकोशस्योत्तरोत्तरः कोश एवाऽऽत्मेति व्याख्यातमापातदर्शनेन, तदसत् . आत्मशब्द-

---

(१) ऐ. आ. २. ३. ५. (२) प्र. उ. ३. ८. "पृथिव्यां या देवता सैषा"० इत्यादि वचनम् । " पृथिवीदेवता पुच्छं सैषेति श्रुतिदर्शनात् । असोराध्यात्मिकस्यैषा स्थितिहेतुः प्रकीर्तिता ॥" वार्तिके. २. ३. ७६ । "पृथिवीशब्देनावशिष्ट उदानवायुरुपलक्ष्यते । मुख्यार्थस्वीकारे हि प्राणमयकोशाधिकारो बाध्येत"—इति सा. भाष्ये व्याख्यातम् । विरोधाभासोऽयं " पृथिवीन ( पृथिवीदेवताक ) उदानोऽयं प्रतिष्ठा पुच्छमीरितः " इति आत्म. पुराणोक्तरीत्या शक्यः परिहर्तुम् ।

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

**तस्यैष एव शारीर आत्मा यः पूर्वस्य ॥**

न्ति' मुख्यप्राणमनु चेष्टन्त इति वा । तथा मनुष्याः पशवश्च ये, ते प्राणनकर्मणैव चेष्टावन्तो भवन्ति, अतश्च नान्नमयेनैव परिच्छिन्नात्मनाऽऽत्मवन्तः प्राणिनः; किं तर्हि ? तदन्तर्गतेन प्राणमयेनापि साधारणेनैव सर्वपिण्डव्यापिनाऽऽत्मवन्तो मनुष्यादयः । एवं मनोमयादिभिः पूर्वपूर्वव्यापिभिरुत्तरोत्तरैः सूक्ष्मैरानन्दमयान्तैराकाशादिभूतारब्धैरविद्याकृतैरात्मवन्तः सर्वे प्राणिनः । तथा स्वाभाविकेनाऽऽप्याकाशादिकारणेन, नित्येन, अविकृतेन, सर्वगतेन, सत्यज्ञानानन्तलक्षणेन, पञ्चकोशातिगेन, सर्वात्मनाऽऽत्मवन्तः—स हि परमार्थत आत्मा सर्वेषामित्येतदप्यर्थादुक्तं भवति । 'प्राणं देवा अनु प्राणन्ति' इत्याद्युक्तं, तत्कस्मात् ? इत्याह—प्राणो हि यस्माद्भूतानां प्राणिनामायुर्जीवनम्—"यावद्ध्यस्मिञ्शरीरे प्राणो वसति तावदायुः" इति श्रुत्यन्तरात्—तस्मात्सर्वायुषम्, सर्वेषामायुः सर्वायुः, सर्वायुरेव 'सर्वायुषम्' इत्युच्यते—प्राणापगमे मरणप्रसिद्धेः। प्रसिद्धं हि लोके सर्वायुष्ट्वं प्राणस्य—अतोऽस्माद्बाह्यादसाधारणादन्नमयादात्मनोऽपक्रम्य, अन्तः साधारणं प्राणमयमात्मानं ब्रह्मोपासते ये—'अहमस्मि प्राणः सर्वभूतानामात्माऽऽयुः, जीवनहेतुत्वात्' इति, ते सर्वमेवाऽऽयुरस्मिँल्लोके यन्ति, नापमृत्युना म्रियन्ते प्राक्प्राप्तादायुष इत्यर्थः । शतं वर्षाणीति तु युक्तम्, "सर्वमायुरेति" इति श्रुतिप्रसिद्धेः। किं कारणं? 'प्राणो हि भूतानामायुस्तस्मात्सर्वायुषमुच्यत इति' । यो यद्गुणकं ब्रह्मोपास्ते, स तद्गुणभाग्भवतीति विद्याफलप्राप्तिहेत्वर्थं पुनर्वचनं 'प्राणो हि' इत्यादि ।

तस्य पूर्वस्यान्नमयस्यैष एव शरीरेऽन्नमये भवः शारीर आत्मा । कः ? य एष प्राणमयः ॥

---

स्यामुख्यार्थत्वप्रसङ्गात्, प्रकृतपरामर्शकैतच्छब्दकोपाच्च। अतः सर्वकोशाध्यासाधिष्ठानभूतश्चिदात्मैवात्राऽऽत्मशब्देन विवक्षित इति तात्पर्यमाह—तथा स्वाभाविकेनेति । अर्थादिति । आत्मशब्दसामर्थ्यात्, कल्पितस्याधिष्ठानत्वानुपपत्तेश्चेत्यर्थः। असाधारणादिति—व्यावृत्तस्वरूपात्। 'अपक्रम्य' तत्राऽऽत्मबुद्धिं हित्वेत्यर्थः। साधारणमिति। सर्वेन्द्रियसाधारणम्—प्राणकृतेनाशनादिना सर्वेषां पुष्ट्यादिदर्शनादित्यर्थः । सर्वभूतानामात्मेति—सूत्रात्मना ।

पूर्वस्य य आत्मा चिद्धातुरेष एव तस्य प्राणमयस्याऽऽत्मेति योजना ॥

---

(१) °णिनो यथाऽनेकास्तुषकोद्रवास्तथा—इति पाठः । (२) कौ. उ. ३. २. (३) तै. ब्रा. ३. १०. ९. १०.; शत. ब्रा. १०. ४. ४. ४. इत्यादा असकृत् । तुलय—तत्रैव १०.२. २. ७, १९; १२. ३. ३. ११; १३. १. २. १; ऐ. ब्रा. २. १७; ऐ. आ. २. २. १; तै. ब्रा. २.५.७.२;१.३.७.

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

मनोमयकोशः　**तस्माद्वा एतस्मात्प्राणमयात् । अन्योऽन्तर आत्मा मनोमयः । तेनैष पूर्णः ।**

तस्योपास्यस्वरूपम्　**स वा एष पुरुषविध एव । तस्य पुरुषविधताम् । अन्वयं पुरुषविधः । तस्य यजुरेव शिरः । ऋग्दक्षिणः पक्षः । सामोत्तरः पक्षः । आदेश आत्मा । अथर्वाङ्गिरसः पुच्छं प्रतिष्ठा ।**

तस्माद्वा एतस्मादित्याद्युक्तार्थमन्यत् । अन्योऽन्तर आत्मा मनोमयः—मन
मनः　इति संकल्पविकल्पात्मकमन्तःकरणं, तन्मयो मनोमयः; सोऽयं प्राणमयस्याभ्यन्तर आत्मा ।

---

विवेकाद्वा ध्यानतो वा पुत्राद्यात्मत्वनिह्नुतौ । तथा देहात्मतां त्यक्त्वा प्राणात्मत्वं विचिन्त्यताम् ॥ ५१ ॥
न देहस्यात्मता युक्ता पूर्वजन्मन्यभावतः । पुरात्मा देहदं कर्म कृत्वा प्राप्नोत्यदो वपुः ॥ ५२ ॥
आयुर्मरणयोर्हेतौ प्राणे जीवात्मतोचिता । स्थिते प्राणे भवत्यायुः प्राणापाये तु हीयते ॥ ५३ ॥
देहात्मवासनानुत्त्यै प्राणात्मत्वमुपास्यताम् । प्राणो ब्रह्मेत्युपासीनः सर्वमायुः समश्नुते ॥ ५४ ॥
प्राणोऽपानः समानश्चोदा नव्यानो च वृत्तयः । एतासु पूर्ववत्पक्षमूर्धादीन् परिकल्पयेत् ॥ ५५ ॥
श्वासोऽधोगमनं कृत्स्ने देहेऽन्नरय समीकृतिः । उद्गारादिबलं देहे क्रियास्तासां क्रमादिमाः ॥ ५६ ॥

—तैत्तिरीयकविद्याप्रकाशः

( १ ) पृ. ६८. ( २ ) इदं नीलम्, इदं पीतमिति विषयविवेचनम् । विकल्पस्तद्विपर्यय इति भेदः । ( ३ ) वियदादिपञ्चसूक्ष्मभूतसत्त्वांशैरारब्धानि श्रोत्रादीनि पञ्च ज्ञानेन्द्रियाणि; तत्सत्त्वांशसमुदायपरिणामरूपमन्तःकरणं; तदुपादानभूतस्य सत्त्वस्यात्मस्वरूपभूतसुखप्रकाशाभिव्यञ्जकसामर्थ्यसद्भावात्, तत्कार्यमन्तःकरणमपि स्वरूपसुखाभिव्यञ्जकवृत्त्यात्मना, स्वरूपप्रकाशाभिव्यञ्जकवृत्त्यात्मना च द्विधा परिणमते । तत्र प्रकाशाभिव्यञ्जिका वृत्तिरपीषद्रजोनुवेधात् संकल्पविकल्पात्मिकां मनःसंज्ञां लभते । रजःसंस्पर्शविरहाच्च नैर्मल्ये सति निश्चयरूपा सती बुद्ध्याख्यां लभते । एवं मनोबुद्धिभेदवृत्तिमदन्तःकरणसहकृतानि चक्षुरादीन्द्रियाण्यपि विमर्शनिश्चयरूपद्विविधज्ञानजनकत्वेन द्विविधानि भवन्ति । तत्र विमर्शज्ञानजनकपञ्चज्ञानेन्द्रियसहितमनःसंज्ञकवृत्तिमदन्तःकरणोपाधिविशिष्ट आत्मा मनोमयः । स च प्रागुक्तात्प्राणापानादिसंघातात् प्राणमयादान्तरत्वेन विभिन्नः—अन्तरवस्थितात्मस्वरूपचैतन्याभिव्यञ्जकत्वलक्षणात्स्वभावभेदात्तस्यान्तरत्वम् । प्राणमयस्तु, रजःपरिणामरूपत्वात्, नोदीरितं चित्प्रकाशमभिव्यनक्ति । अत एव सुषुप्तौ सत्यामपि प्राणवृत्तौ जाग्रद्वच्चैतन्यस्य विशेषाभिव्यक्तिर्न दृश्यते । उच्छ्वासनिःश्वासादिक्रियाप्रवर्तकः सन्नन्नमयदेहस्य धारणमेव केवलं करोति । तथाच प्राणवाक्यम्—"अहमेवैतत्पञ्चधात्मानं प्रविभज्यैतद्बाणमवष्टभ्य विधारयामि ।" ( प्रश्न. उ. २. ३. ) इति । एवमनयोर्विविक्तरूपत्वान्मनोमय आत्मा प्राणमयादान्तरः; विविक्तश्च प्रत्येतव्यः

—तात्पर्यदीपिका ४. ३. ४०.

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

**तस्य यजुरेव शिरः ।** यजुरित्यनियताक्षरपादावसानो मन्त्रविशेषः, तज्जातीयवचनो ‘ यजुः ’ शब्दः, तस्य शिरस्त्वं प्राधान्यात् । प्राधान्यं च यागादौ संनिपत्योपकारात्, यजुषा हि हविर्दीयते स्वाहाकारादिना । वाचनिकी वा शिरआदिकल्पना सर्वत्र । मनसो हि स्थानप्रयत्ननादस्वरवर्णपदवाक्यविषया तत्संकल्पात्मिका तद्भाविता वृत्तिः श्रोत्रकरणद्वारा यजुःसंकेतविशिष्टा यजुरित्युच्यते । एवमृक्, एवं साम च । एवं च

मन्त्राणां मनोवृत्तित्वम्

यजुःशब्देन बाह्यो यजुर्वेद उच्यते, तस्य कथमान्तरं मनोमयं प्रति शिरस्त्वम् ?—इत्याशङ्क्याऽऽह—**मनसो हीति ।** यद्यपि यजुःशब्दो बाह्ये शब्दराशौ रूढः, तथाऽपि श्रुतेरनतिशङ्कनीयत्वात्, तत्प्रामाण्याद्विशिष्टमनोवृत्तिर्यजुःसंकेतविषयभूता ‘यजुर्वेदमधीमहे’ एतत्क्रमका

---

(१) “ चत्वारि वाक्परिमिता पदानि । तानि विदुर्ब्राह्मणा ये मनीषिणः । गुहा त्रीणि निहिता नेङ्गयन्ति । तुरीयं वाचो मनुष्या वदन्ति ” ॥ (तै. ब्रा. २. ८. ८; ऋ. सं. मं. १. सू. १६४. ऋ. ४५) इति वाचः पादचतुष्टयमाख्यातम् । परा, पश्यन्ती, मध्यमा, वैखरी—इत्येवं चतुरवस्थाया वाचस्तुरीयः पादो वैखर्यात्मकः; स एव शरीरिणां प्रेषणाध्येषणादिव्यवहारहेतुः—परश्रोत्रग्राह्यात्मकं वैखर्यात्मकमेव शब्दं मनुष्यादयोऽभिवदन्ति । स च वैखर्यात्मकः शब्दः स्वत एवैकरूपोऽपि कण्ठताल्वाद्यभिव्यक्तिस्थानभेदात्स्वरव्यञ्जनादिभेदेन नानात्वं भजते । “शब्दे प्रयत्ननिष्पत्तेः” (जै. सू. १. ३. २५) इत्यत्र शबरस्वामिभिरुक्तम्—‘ महता प्रयत्नेन शब्दमुच्चरन्ति,—वायुर्नाभेरुत्थितः, उरसि विस्तीर्णः, कण्ठे विवर्तितः, मूर्धानमाहत्य परावृत्तः, वक्त्रे विचरन् विविधान् शब्दानभिव्यनक्ति । “ तथाच शिक्षायाम्—‘ आत्मा बुद्ध्या समेत्यार्थान्मनो युङ्क्ते विवक्षया । मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् । सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः । वर्णाञ्जनयते ’ इत्यादि । आत्मा—अन्तःकरणं संस्काररूपेण स्वगतानर्थान् बुद्ध्या स्ववृत्त्या समेत्य एकबुद्धिविषयान् कृत्वा तद्बोधनेच्छया युक्तं मनः करोति । तन्मनः कायाग्निं जाठराग्निमभिहन्ति । सोऽग्निर्मारुतं प्रेरयति । स मारुत ऊर्ध्वं प्रेरितो मूर्ध्न्यभिहतः परावृत्त्य वक्त्रं ताल्वादिस्थानं प्राप्य वर्णानभिव्यनक्ति । एवं च शब्दप्रयोगेच्छोत्पन्नयत्नाभिहताग्निप्रेरितनाभिप्रदेशगतवायुर्वेगान्मूर्धानं गत्वा प्रतिनिवृत्तो वक्त्रं प्राप्य यत्नविशेषसहायः ताल्वादितत्तत्स्थानेषु जिह्वाग्रादिस्पर्शपूर्वकमभिहतो वर्णविशेषानभिव्यनक्तीति त एते आभ्यन्तरप्रयत्नाः । ततो यत्नविशेषैर्गलविवरविकासादीन् करोति । त एते बाह्यप्रयत्नाः । एतैश्च प्रयत्नैर्वर्णा यथावदभिव्यज्यन्ते । ” कुतूहलवृत्तौ । ननु शब्दात्मकानां यजुरादीनां कथं मनोमयावयवत्वम् ?—इत्याशङ्कां परिहरति—मनस इत्यादिना । यद्यपि यजुरादिर्वेदः शब्दराशिरूप एव प्रसिद्धः, न मानसज्ञानरूपः, तथापि यजुरादेः स्वरूपघटिका प्रमाणत्वघटिका वा वृत्तिर्मानस्येव तिष्ठति; तेन यजुरादिशब्दानां वृत्तिपरत्वाङ्गीकारेण मनोमयस्यावयवत्वमुपपन्नमित्यर्थः । अयं भावः—न केवला वर्णा वेदः; किंतु स्थानप्रयत्नस्वराद्यनुसंधानविशिष्टाः; तथाच यजुरादिस्वरूपं मनोवृत्तिघटितम् ; एवं प्रमाजनकत्वमपि न स्वरूपेणैव वेदवाक्यानां, किंतु मानसवृत्तिरूपेणैवेति । अनेन मनोमयेन प्रमाणात्मकेनाविषयोप्यात्माऽऽवरणभङ्गद्वारा प्रकाश्यते । यद्यपि यजुराद्या वाचः, तत्स्वरूपघटकं मनश्च—एतेषां प्रमाणभूतानां स्वान्तर्गतमानन्दरूपमात्मानं प्रवेदयितुं—प्रकाशयितुं न शक्तिः, तथाप्यधिकारी मनोमयस्य स्वरूपान्तर्गतमानन्दमन्तर्मुखेनावरणभञ्जकेन जानन्सन् संसारान्न बिभेति ।

(२) जै. सू. ४. १. ३.

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

मनोवृत्तित्वे मन्त्राणां, वृत्तिरेवाऽऽवर्त्यते, इति मानसो जप उपपद्यते—अन्यथाऽविषयत्वान्मन्त्रो नाऽऽवर्तयितुं शक्यो घटादिवत्, इति मानसो जपो नोपपद्यते; मन्त्रावृत्तिश्च उद्यते बहुशः कर्मसु।

अक्षरविषयस्मृत्यावृत्त्या मन्त्रावृत्तिः स्यादिति चेत्, न; मुख्यार्थासंभवात्। "त्रिः प्रथमामन्वाह त्रिरुत्तमाम्" इति ऋगावृत्तिः श्रूयते। तत्रर्चोऽविषयत्वे तद्विषयस्मृत्यावृत्त्या मन्त्रावृत्तौ च क्रियमाणायां "त्रिः प्रथमामन्वाह" इति ऋगावृत्तिर्मुख्योऽर्थश्चोदितः परित्यक्तः स्यात्।

तस्मान्मनोवृत्त्युपाधिपरिच्छिन्नं, मनोवृत्तिनिष्ठमात्मचैतन्यम्—अनादिनिधनं, यजुःशब्दवाच्यम्, आत्मविज्ञानं—मन्त्रा इति। एवं च नित्यत्वोपपत्तिर्वेदानाम्, अन्यथाविषयत्वे रूपादिवदनित्यत्वं च स्यात्; नैतद्युक्तम्—"सर्वे वेदा यत्रैकं भवन्ति ··· स मानसीन आत्मा" इति च श्रुतिर्नित्यात्मनैकत्वं ब्रुवन्ती, ऋगादीनां नित्यत्वे, समञ्जसा स्यात्; "ऋचो अक्षरे परमे व्योमन्यस्मिन्देवा अधि विश्वे निषेदुः" इति च मन्त्रवर्णः।

(चिदात्मत्वाद्वेदस्य नित्यत्वम्)

---

वर्णा यजुर्वेदतयाऽध्येतव्या इत्येवं संकल्परूपा ग्राह्येत्यर्थः। श्रुत्यनुग्राहिकां युक्तिमप्याह—एवं चेति। अन्यथेति। शब्दानां घटादिवद्बाह्यद्रव्यत्वे, मनोविषयत्वासंभवात्, मनसो बाह्येऽर्थेऽस्वातन्त्र्यात्, मानसो जपो न स्यादित्यर्थः। इतश्च मनोवृत्तित्वं मन्त्राणां वाच्यमित्याह—मन्त्रावृत्तिश्चेति। शब्दानां घटादिवद्बाह्यद्रव्यत्वे, मन्त्राणां घटादिवदावृत्तिर्नोपपद्यते, क्रियैव ह्यावर्त्यते।

आवृत्तिसिद्ध्यनुपपत्त्या क्रियात्वं वाच्यमित्युक्तं, तत्रान्यथाऽप्युपपत्तिमाशङ्कते—अक्षरविषयेति। मन्त्रेभ्यः स्मृतेरन्यत्वादन्याऽऽवृत्तिर्गौणी प्रसज्यते, अतो नान्यथाऽप्युपपत्तिरित्युक्तम्। एतत्स्फुटयति—त्रिः प्रथमामित्यादिना। सामिधेन्यः समिधो यदाऽध्वर्युणा हूयन्ते, तदा "प्र वो वाजा अभिद्यवः" इत्यष्टादशर्चं सूक्तं होता शंसति, तासां चर्चां मध्ये प्रथमामृचं सूक्तस्यान्त्यां चर्चं होता त्रिरनुब्रूयादित्यावृत्तिः श्रूयत इत्यर्थः।

मन्त्राणां मनोवृत्तित्वमुक्त्वा—मनोवृत्तीनां सदा चिद्व्याप्तत्वेनैव सिद्धेः—चिदात्मतामाह—

---

(१) तै. सं. २. ५. ७. १; शत. ब्रा. १. ३. २. ६; ऐ. ब्रा. १. ३. २, ५. इत्यादौ। (२) तै. आ. ३. ११. १. (३) ऋ. सं. १. १६४. ३९; अ. सं. ९. १०. १८; गो. ब्रा. १. १. २२; तै. ब्रा. ३. १०. ९. ४; तै. आ. २. ११. १; श्वे. उ. ४. ८; नृ. उ. उ. ४. २. (४) सामिधेन्य ऋचो यद्यपि मूले (तै. ब्रा. ३. ५. २. १—१२.) द्वादश पठिताः, तथाप्यन्तयोः पुरुषभेदेन विकल्पितत्वादेकादशैव। सम्यगिध्यते ज्वाल्यतेऽग्निर्याभिर्ऋग्भिस्ताः सामिधेन्यः। तथा चोक्तम्—"ऋक्सामिधेनी धाय्या च या स्याद-

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

तदप्येष श्लोको भवति ।

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि ब्रह्म—आनन्द—वल्ल्या
तृतीयोऽनुवाकः ॥ ३ ॥

---

आदेशोऽत्र ब्राह्मणम्, आदेष्टव्यविशेषानादिशतीति । अथर्वणाऽङ्गिरसा च दृष्टा मन्त्राः, ब्राह्मणं च शान्तिकपौष्टिकादिप्रतिष्ठाहेतुकर्मप्रधानत्वात्पुच्छं प्रतिष्ठा ।

तदप्येष श्लोको भवति मनोमयात्मप्रकाशकः पूर्ववत् ।

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवतः
कृतौ तैत्तिरीयोपनिषदि ब्रह्म--आनन्द--वल्लीभाष्ये तृतीयोऽनुवाकः ॥ ३ ॥

---

तस्मादिति । मन्त्राणां मनोवृत्तित्वेनाऽऽवृत्तिर्घटत इत्युक्तम्, परम्परया चिदात्मत्वेन नित्यत्वमपि घटत इत्याह— एवं चेति—चैतन्यरूपत्वे सति । अन्यथेति—स्वप्रकाशचिदात्मत्वानङ्गीकारे रूपादिवद्विषयत्वादनित्यत्वमपि प्रसज्येत । कालिदासादिवाक्यानामप्येतेन न्यायेन नित्यत्वापाताद्युक्तयाभासमेतत् । अस्त्वनित्यत्वमिति न वाच्यमित्याह—नैतद्युक्तमिति । "वाचा विरूपनित्यया" इति श्रुत्या नित्यत्वस्याऽऽवेदितत्वात्, वेदानित्यत्वं युक्तं न भवतीत्यर्थः । वेदानां जडत्वे स्वप्रकाशेनाऽऽत्मनैकत्वं न संभवति, जडाजडयोर्विरोधात्, अतो मनोवृत्तिव्यापकचिदात्मत्वं सूचितमित्यर्थः । साक्षितया मनसि भवो 'मानसीनः' 'अक्षरे परमे' व्योमकल्पे ब्रह्मणि 'ऋचः' विधिनिषेधरूपा 'निषेदुः'—तादात्म्येन व्यवस्थिताः— इति च मन्त्रवर्ण एकत्वं दर्शयतीत्यर्थः ।

'आदेष्टव्यविशेषान्कर्तव्यविशेषान्—इदमेवं कर्तव्यम्—इत्युपादिशतीत्यर्थः ।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दज्ञानविरचिते तैत्तिरीयोपनिषच्छांकरभाष्यटिप्पणे ब्रह्म—आनन्द—वल्ल्यां तृतीयोऽनुवाकः ॥ ३ ॥

---

न्निसमिन्धने" ( अम. को. ब्र. व. श्लो. २२. ) इति । सवनीयस्य पशोः प्रोक्षणादूर्ध्वमध्वर्युणा प्रेषितो होता सामिधेनीरनुब्रूयात् । तासामेकादशानां मध्ये 'त्रिः प्रथमामन्वाह त्रिरुत्तमाम्' इति वचनानुसारेणावृत्तौ सत्यां पञ्चदश संपद्यन्ते । सप्तदशसंख्यायाः पूरणीयत्वे तु "पृथुपाजा अमर्त्यः" (ऋ. सं. मं. ३ सू. २७ ऋ. ५) इत्याद्यपरर्गद्वयस्य तासु प्रक्षेपोऽपि विधीयते । एवमेकविंशतित्वे संपादनीये षण्णामप्यृचां प्रक्षेपो विहितः । ताः प्रक्षेपणीयर्चं एव धाय्या उच्यन्ते ( ऐ. ब्रा. ३. २.७. ) तुलय—तै. सं. २. ५. ७; जै. सू. ९. १. ३३.

( १ ) तै. सं. २. ६. ११. २.; ऋ. सं. मं. ८. ७५. ६.; मै. सं. ४. ११. ६.

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

## अथ चतुर्थोऽनुवाकः

मनोमये श्लोकः यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह ।
आनन्दं ब्रह्मणो विद्वान् । न बिभेति कदा-
चनेति ।
तस्यैष एव शारीर आत्मा । यः पूर्वस्य ॥

विज्ञानमयकोशः तस्माद्वा एतस्मान्मनोमयात् । अन्योऽन्तर
आत्मा विज्ञानमयः । तेनैष पूर्णः ।

यतो वाचो निवर्तन्ते । अप्राप्य मनसा सहेत्यादि ।

तस्य पूर्वस्य प्राणमयस्यैष एवाऽऽत्मा शारीरः—शरीरे प्राणमये भवः 'शारीरः' । कः ? य एष मनोमयः ॥

तस्माद्वा एतस्मादिति पूर्ववत् । अन्योऽन्तर आत्मा विज्ञानमयो मनोमयस्याभ्यन्तरो 'विज्ञानमयः' । मनोमयो वेदात्मोक्तः; वेदार्थविषया बुद्धिर्निश्च-

---

वाङ्मनसयोर्वाङ्मनसगोचरत्वं नोपपद्यते, स्वात्मनि वृत्तिविरोधात्, अतो वाङ्मनोविशिष्टान्मनोमयाद्वाचो मनसा सह निवर्तन्त इत्यर्थः । तस्य च मनोमयस्य 'ब्रह्मणः' उपासनफलभूतमाधिदैविकमानन्दं विद्वान्न बिभेति गर्भवासादिदुःखादित्यर्थः ।

वेदार्थेति । तथाऽध्यवसायलक्षणं लौकिकमपि विज्ञानं ग्राह्यमित्यर्थः ।

---

(१) अस्य श्लोकस्य मुख्यार्थोऽग्रे ९ अनुवाके भाष्ये द्रष्टव्यः । कोशप्रकरणविरोधात् परब्रह्मपरिग्रहोऽत्र नोपपद्यते । ब्रह्मैव वाङ्मनसयोरविषयः, व्यतिरिक्तं सर्वं ययोर्विषयत्वेनैव वर्तते, ते वाङ्मनसे मनोमयकोशे निर्दिश्येते । न हि मनसः साक्षिवेद्यत्वेनानपेक्षस्य वागादिविषयत्वं, वृत्तिविरोधाच्च न स्वविषयत्वं, सूत्रस्य महत्त्वात् तदात्मके मनसि ब्रह्मशब्दश्चोपपद्यते; तस्य ब्रह्मणो मनोमयस्याऽऽनन्दमुपासनाफलं विद्वान्, उपासनातो ब्रह्मानन्दं च प्राप्य हिरण्यगर्भावस्थायां कदाचिदपि न बिभेतीति मन्त्राक्षराण्यपि कोशपक्षे निर्वहन्ति ।

(२) वृत्तिसंवं प्राणमयं ध्यात्वा देहात्मवासनाम् । संत्यज्याथ प्राणमये त्यजेद्देहवदात्मताम् ॥ ५७ ॥
प्राणो नात्मा जडत्वेन चेतनस्यात्मतोचिता । मनस्तु चेतनत्वेन सर्वस्य प्रतिभासनात् ॥ ५८ ॥
चक्षुराद्यक्षसापेक्षं मनो बाह्यार्थभासकम् । निरपेक्षेण मनसा सुखाद्यान्तरभासनम् ॥ ५९ ॥
आत्मत्वं मनसो बुद्ध्वा त्यक्तुं प्राणात्मवासनाम् । उपासीत मनस्तच्च वृत्त्याख्यावयवैर्युतम् ॥ ६० ॥
यजुराद्याश्चतुर्वेदा आदेशस्तद्गतो विधिः । तद्भासके मनोवृत्तिपञ्चके पक्षिकल्पना ॥ ६१ ॥
अवाङ्मनसगम्यस्य ब्रह्मणोऽप्यवबोधने । शक्तं भवेन्मनस्तच्च मनो ब्रह्मेति कल्पना ॥ ६२ ॥
न ब्रह्मणि मनोजन्यस्फूर्तिस्तस्मादगम्यता । मनस्यन्तर्मुखे नश्येदविद्या तेन शक्तिता ॥ ६३ ॥
—तैत्तिरीयकविद्याप्रकाशः

(३) °त्यर्थः । त° । इति पाठः । (४) °था ऽयव° इति पाठः ।

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

तस्योपास्य-स्वरूपम्

**स वा एष पुरुषविध एव। तस्य पुरुषविधताम्। अन्वयं पुरुषविधः। तस्य श्रद्धैव शिरः। ऋतं दक्षिणः पक्षः। सत्यमुत्तरः पक्षः। योग आत्मा। महः पुच्छं प्रतिष्ठा।**

**तदप्येष श्लोको भवति।**

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि ब्रह्म—आनन्द—वल्ल्यां चतुर्थोऽनुवाकः ॥ ४ ॥

---

यात्मिका विज्ञानं, तच्चाध्यवसायलक्षणमन्तःकरणस्य धर्मः, तन्मयः—निश्चयविज्ञानैः प्रमाणस्वरूपैर्निर्वर्तित आत्मा—विज्ञानमयः। प्रमाणविज्ञानपूर्वको हि यज्ञादिस्तायते। यज्ञादिहेतुत्वं च वक्ष्यति श्लोकेन।

---

(१) इदमित्थमेवेति विषयपरिच्छेदः (२) मनोवृत्तीनां मध्ये विशिष्टं 'अहं कर्ता' इत्येवंरूपं ब्रातज्ञानयस्य कर्तृत्वधर्मोपेतस्य वस्तुनो ग्राहकं भवति, तद्वस्तु विज्ञानम्; तस्य विकारो विज्ञानमयः। रजोमिश्रसत्त्वगुणकार्यं हि विज्ञानमहंप्रत्ययाविषयाभिमन्तृरूपेण विक्रियते। तमेतमभिमन्तारं सर्वे जना अहंप्रत्ययेन विषयं कुर्वन्ति। द्विविधो मनसः प्रत्ययः—इदंप्रत्ययः, अहंप्रत्ययश्चेति। तत्रेदंप्रत्ययो बहिर्मुखतया प्रमातुरन्यपदार्थं प्रमेयं विषयीकरोति। अहंप्रत्ययस्त्वन्तर्मुखः प्रमातरमेव विषयीकरोति। योऽयमहंप्रत्ययविषयोऽभिमन्ता सर्वेषु प्रमाणव्यवहारेषु प्रमाता, सोऽयमत्र विज्ञानमयः। नन्वात्मैव व्यवहारस्य कर्ता भवति; न त्वसौ विज्ञानमयाख्यश्चतुर्थः कोशः। अत एव भगवान् बादरायणः "कर्ता शास्त्रार्थवत्त्वात्" (ब्र. सू. २.३.३३.) इति सूत्रयामास। नायं दोषः—आत्मकर्तृत्वस्यौपाधिकत्वात्। एतच्च "यथा च तक्षोभयथा" (ब्र. सू. २.३.४०.) इत्येवं सूत्रितम्। तर्हि पूर्वोक्तबाह्येन्द्रियान्तःकरणसमूहरूपमनोमयस्य संयोगेनैवात्मनः कर्तृत्वसिद्धौ किमनेन विज्ञानमयेन? इति चेन्मैवम्। यदि ब्राह्मणादौ प्रासादगोचरज्ञानक्रियाशक्त्योरभावात्तक्षाऽपेक्ष्यते, तर्ह्यत्रापि सर्वव्यवहारगोचरज्ञानक्रियाशक्तियुक्तो विज्ञानमयोऽपेक्ष्यते। न चासङ्गस्यात्मन आरोपमन्तरेण शक्तिद्वयं संभवति। आरोपश्च क्वचिन्मुख्यस्यैवाधारान्तरे दृश्यते—विलगते हि सर्पे मुख्यं सर्पत्वं रज्जावारोप्यमाणं दृष्टम्; तस्मादत्रापि विज्ञानमये मुख्यं शक्तिद्वयं चिदात्मन्यारोप्यताम्। सोऽयं कर्तृत्वशक्तियुक्तो विज्ञानमयः करणशक्तियुक्तान्मनोमयादभ्यन्तरः। नन्वेकस्यैवान्तःकरणस्य तत्त्वस्य मनोबुद्ध्यहंकारचित्ताख्याश्चत्वारो वृत्तिभेदाः। एते च वृत्तिविशेषाः क्षणिकाः कालभेदेनैवोत्पद्यन्ते "युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्" (गौ. सू. १.१.१६) इति न्यायात्। तथा सति वृत्तिमात्रस्वरूपयोर्मनोमयविज्ञानमययोरन्नमयप्राणमयवत् पृथक्कृतस्वरूपत्वाभावाद्भिन्नकालनित्वाच्चान्तर्बहिर्भावो न युक्त इति चेत्, न; करणरूपेण कर्तृरूपेण च तयोस्तत्त्वभेदाङ्गीकारात्। पूर्वोक्ता मनोबुद्ध्यादयश्चत्वारोऽपि करणस्यैव व्यापारविशेषाः। कर्तृरूपं तु करणात् पृथगेव तत्त्वम्। तच्च बुद्धिशब्देन, विज्ञानशब्देन, अहंशब्देन च तत्र तत्र व्यवह्रियते। अयमेव कर्ता भोक्ता नैयायिकादिमतसिद्धो जीवात्मा। सांख्याश्चैवमाहुः—अंतःकरणं त्रिविधमिति। तत्रेन्द्रियाणामेकादशसंख्यापूरकं मनोनामकमेकम्। अहंकारतत्त्वं द्वितीयम्। महत्तत्त्वं तृतीयम्। तेष्वहंकारमेवं लक्षयन्ति—अभिमानोऽहंकार इति। स एष चितिच्छायोपेतोऽहंकारोऽत्र विज्ञानमयः।

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

## अथ पञ्चमोऽनुवाकः

विज्ञानमये श्लोकः विज्ञानं यज्ञं तनुते । कर्माणि तनुतेऽपि च ।
विज्ञानं देवाः सर्वे । ब्रह्म ज्येष्ठमुपासते । वि-
ज्ञानं ब्रह्म चेद्वेद । तस्माच्चेन्न प्रमाद्यति । शरीरे
पाप्मनो हित्वा । सर्वान्कामान्त्समश्नुत इति ।

निश्चयविज्ञानवतो हि कर्तव्येष्वर्थेषु पूर्वं श्रद्धोत्पद्यते, सा सर्वकर्तव्यानां प्राथम्याच्छिर इव शिरः । 'ऋतसत्ये' यथाव्याख्याते एव । योगो युक्तिः समाधानम्, आत्मैवाऽऽत्मा । आत्मवतो हि युक्तस्य समाधानवतोऽङ्गानीव श्रद्धादीनि यथार्थप्रतिपत्तिक्षमाणि भवन्ति, तस्मात्समाधानं योग आत्मा विज्ञानमयस्य । महः पुच्छं प्रतिष्ठा । 'महः' इति महत्तत्त्वं प्रथमजम्, "महद्यक्षं प्रथमजं वेद" इति श्रुत्यन्तरात्, 'पुच्छं' प्रतिष्ठा कारणत्वात्—कारणं हि कार्याणां प्रतिष्ठा, यथा वृक्षवीरुधां पृथिवी । सर्वविज्ञानानां च महत्तत्त्वं कारणम् । तेन तद्विज्ञानमयस्याऽऽत्मनः प्रतिष्ठा ।

तदप्येष श्लोको भवति पूर्ववत् । यथाऽन्नमयादीनां ब्राह्मणोक्तानां प्रकाशकाः श्लोकाः, एवं विज्ञानमयस्यापि ।

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवतः कृतौ तैत्तिरीयोपनिषदि ब्रह्म—आनन्द—वल्लीभाष्ये चतुर्थोऽनुवाकः ॥ ४ ॥

---

विज्ञानं यज्ञं तनुते । विज्ञानवान् हि यज्ञं तनोति श्रद्धादिपूर्वकम् । अतो विज्ञानस्य कर्तृत्वं—'तनुते' इति; कर्माणि च तनुते । यस्माद्विज्ञानकर्तृकं

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दज्ञानविरचिते तैत्तिरीयोपनिषच्छांकरभाष्यटिप्पणे ब्रह्म—आनन्द—वल्ल्यां चतुर्थोऽनुवाकः ॥ ४ ॥

---

( १ ) गुरुशास्त्राभ्यामभिहिते तत्त्वे, तदवबोधोपाययोश्च परमो विश्वासः । यद्यपि श्रद्धादयो वृत्तिरूपत्वान्मनोमयस्य कार्याः, तथापि विज्ञानमयस्य कर्तृत्वेन करणतद्वृत्तिस्वामित्वान्मनोवृत्तय एतदीया अपि भवन्तीत्यभिप्रेत्य विज्ञानमयस्य श्रद्धा शिर इत्युच्यते । ( २ ) उपपद्यते—पाठः । ( ३ ) पृ. ८ ( ४ ) अध्यात्मशास्त्रनिश्चयः समाधानरूपः, दक्षिणोत्तरपक्षाभ्यां चित्तशुद्धिद्वारोपकार्यत्वेन मध्यभागः । ( ५ ) हिरण्यगर्भाख्यं—सूत्रम् । ( ६ ) बृ. उ. ५.४. १. यक्षम् = पूज्यम् । ( ७ ) न्यायवैशेषिकादिशास्त्राणि मिथ्यात्मन्येव कर्तृत्वादियुक्त उपक्षीणानि । सांख्यशास्त्रं यद्यपि चिदात्मनि मुख्ये प्रवृत्तं, तथापि तावत्येव पर्यवसितम् । वेदान्तास्तु तस्य मुख्यात्मन ईश्वरत्वमशेषजगद्रूपत्वं च प्रतिपादयन्तीति विशेषः ।

* अत्र शकाराकारस्य सानुदात्तः पाठोऽपि वैदिकेषु प्रसिद्धः ।

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

तस्यैष एव शारीर आत्मा । यः पूर्वस्य ॥

सर्वं, तस्माद्युक्तं विज्ञानमय आत्मा ब्रह्मेति । किंच, विज्ञानं ब्रह्म सर्वे देवा इन्द्रादयो ज्येष्ठं–प्रथमजत्वात्, सर्ववृत्तीनां वा तत्पूर्वकत्वात्, प्रथमजं विज्ञानं ब्रह्मोपासते ध्यायन्ति—तस्मिन्विज्ञानमये ब्रह्मण्यभिमानं कृत्वोपासत इत्यर्थः । तस्मात्ते महतो ब्रह्मण उपासनाज्ज्ञानैश्वर्यवन्तो भवन्ति । तच्च विज्ञानं ब्रह्म चेद्यदि वेद विजानाति, न केवलं वेदैव, तस्माद्ब्रह्मणश्चेन्न प्रमाद्यति–बाह्येष्वेवानात्मस्वात्मा भावितः, तस्मात्प्राप्तं विज्ञानमये ब्रह्मण्यात्मभावनायाः प्रमदनं, तन्निवृत्त्यर्थमुच्यते 'तस्माच्चेन्न प्रमाद्यति' इति —अन्नमयादिष्वात्मभावं हित्वा, केवले विज्ञानमये ब्रह्मण्यात्मत्वं भावयन्नास्ते चेदित्यर्थः । ततः किं स्यादिति ? उच्यते—शरीरे पाप्मनो हित्वा; शरीराभिमाननिमित्ता हि सर्वे पाप्मानः, तेषां च विज्ञानमये ब्रह्मण्यात्माभिमानात्, निमित्तापाये हानमुपपद्यते, छत्रापाय इव च्छायायाः । तस्माच्छरीराभिमाननिमित्तान्सर्वान् पाप्मनः शरीरप्रभवाञ्शरीर एव हित्वा, विज्ञानमयब्रह्मस्वरूपापन्नस्तत्स्थान्सर्वान्कामान्विज्ञानमयेनैवाऽऽत्मना समश्नुते सम्यग्भुङ्क्त इत्यर्थः ।

(विज्ञानमयोपासनस्य द्विविधं फलम् — (१) पापक्षयः — (२) सर्वकामावाप्तिः)

तस्य पूर्वस्य मनोमयस्याऽऽत्मैष एव शरीरे मनोमये भवः शारीरः । कः ? य एष विज्ञानमयः ॥

---

प्रथमजत्वादिति । हिरण्यगर्भाभेदेनेत्यर्थः ॥

---

(१) प्रवृत्तीनां—पाठः । (२) सगुणब्रह्मविदो देहपातात्प्रागेव पुण्यपापत्यागः ब्र. सू. ३. ३. २७ इत्यत्र चिन्तितः ।

(३) प्राणात्मवासनानाशे मनसोऽप्यात्मतां त्यजेत् । कर्तुरात्मत्वमुचितं मनोऽन्तःकरणं खलु ॥ ६४ ॥
अहंकर्तेत्यदोऽज्ञानं विशिष्टं यस्य भासकम् । तत्कर्तृरूपं विज्ञानमात्मत्वेनावगम्यताम् ॥ ६५ ॥
अहंक्रियत इत्येषोऽहंकाराख्यः स विग्रहे । आनखाग्रमभिव्याप्य स्थितो जागरणे स्फुटः ॥ ६६ ॥
तेन चेतनवद्देहो भाति सुप्तौ तु तल्लयात् । भवेत्काष्ठसमो देहस्तेनाहंकार आत्मता ॥ ६७ ॥
मदीयं मन इत्युक्तेरात्मनः करणं मनः । इत्यात्मानं विविच्याथ तमुपासीत पक्षिवत् ॥ ६८ ॥
श्रद्धाद्याः पञ्च तत्रस्थाः कल्प्या मूर्द्धादिरूपतः । श्रद्धास्तिक्यमृतं बुद्धौ यथा वस्त्वनुचिन्तनम् ॥ ६९ ॥
यथार्थभाषणं सत्यं योग एकाग्रता धियः । महस्तु योगजं ज्ञानं चिन्त्याः श्रद्धादयोऽखिलाः ॥ ७० ॥
लौकिके वैदिके कर्तृविज्ञानं ब्रह्म वेत्ति चेत् । त्यजेदामरणं नोचेद्ब्रह्मलोके सुखं व्रजेत् ॥ ७१ ॥

—तैत्तिरीयकविद्याप्रकाशः

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

आनन्दमयकोशः तस्माद्वा एतस्माद्विज्ञानमयात् । अन्योऽन्तर आ-
त्माऽऽनन्दमयः । तेनैष पूर्णः ।

तस्योपास्यस्वरूपम् स वा एष पुरुषविध एव । तस्य पुरुषविधताम् ।
अन्वयं पुरुषविधः । तस्य प्रियमेव शिरः ।

तस्माद्वा एतस्मादित्युक्तार्थम् । 'आनन्दमयः' इति कार्यात्मप्रतीतिः—(१) अधिकारात्, (२) मयट्शब्दाच्च—अन्नादिमया हि कार्यात्मानो भौतिका इहाधिकृताः, तदधिकारपतितश्चायं 'आनन्दमयः;' मयट्चात्र विकारार्थे दृष्टः, यथा 'अन्नमयः' इत्यत्र; तस्मात्कार्यात्मा 'आनन्दमयः' प्रत्येतव्यः; (३) संक्रमणाच्च—'आनन्दमयमात्मानमुपसंक्रामति' इति वक्ष्यति, कार्यात्मनां च संक्रमणमनात्मनां दृष्टम्, संक्रमणकर्मत्वेन च 'आनन्दमय' आत्मा श्रूयते, यथा 'अन्नमयमात्मानमुपसंक्रामति' इति; न चाऽऽत्मन एवोपसंक्रमणम्, अधिकारविरोधात्; असंभवाच्च—न ह्यात्मनैवाऽऽत्मन उपसंक्रमणं संभवति, स्वात्मनि भेदाभावात्, आत्मभूतं च ब्रह्म संक्रमितुः; (४) शिरआदिकल्पनानुपपत्तेश्च—न हि यथोक्तलक्षण आकाशादिकारणेऽकार्यपतिते शिरआद्यवयवरूपकल्पनोपपद्यते, 'अदृश्येऽनात्म्येऽनिरुक्तेऽनिलयने,' 'अस्थूलमनणु', 'नेति नेत्यात्मा' इत्यादिविशेषापोहश्रुतिभ्यश्च; (५) मन्त्रोदाहरणानुपपत्तेश्च—न हि, प्रियशिरआद्यवयवविशिष्टे प्रत्यक्षतोऽनुभूयमान आनन्दमय आत्मनि ब्रह्मणि 'नास्ति ब्रह्म' इत्याशङ्काभावात्, "असन्नेव स भवति । असद्ब्रह्मेति वेद चेत्" इति मन्त्रोदाह-

---

'आनन्दमयः परमात्मा' इति वृत्तिकारैरुक्तं, तन्निषेधेन व्याचष्टे—कार्यात्मप्रतीतिरित्यादिना । 'संक्रामति' इत्येतदतिक्रामतीत्यभिप्रायेण व्याख्यातम्; प्राप्त्यभिप्रायं कस्मान्न व्याख्यायत इत्यत आह—न चाऽऽत्मन एवेति । अन्नमयादीनामतिक्रमणीयतया प्रकृतत्वात्, एकस्य कर्तृत्वकर्मत्वासंभवाच्च, प्राप्तिः संक्रमणं न भवतीत्यर्थः । आनन्दमयस्य

---

(१) 'आनन्दमयो ब्रह्म' इति न युज्यते—(१) अन्नमयादिगतविकारार्थमयट्प्रायपाठितेन मयटा तस्य विकारत्वावगमात्; (२) शिरःपक्षाद्यवयवयोगात्; (३) पुच्छत्वेन निर्दिष्टाद्ब्रह्मणस्तस्य व्यतिरेकप्रतीतेः; (४) अन्नमयादिपर्यायेषु प्रधानानां तत्तत्पर्यायगतश्लोकाविषयत्वदर्शनेन स्वपर्यायगतश्लोकाविषयस्य तस्याप्राधान्यात्; (५) "तस्यैष एव शारीर आत्मा यः पूर्वस्य" इति अन्नमयादीनामिव तस्याप्यात्मान्तरश्रवणात्; (६) "अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमया मे शुध्यन्ताम्" इति शोध्यत्वश्रवणाच्च । इति न्यायरक्षामणौ आनन्दमयाधिकरणे । (२) तै. उ. २. ८. उप—संक्रमणं = बाधः । (३) अनात्मनां—पाठः । (४) तै. उ. २. ७ (५) बृ. उ. ३. ८. ८. (६) बृ. उ. ३. ९. २६ चतुःकृत्वः (७) तै. उ. २. ६.

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

रणमुपपद्यते; ‘ ब्रह्म पुच्छं प्रतिष्ठा ’ इत्यपि चानुपपन्नं पृथग्ब्रह्मणः प्रतिष्ठात्वेन ग्रहणम्;—तस्मात्कार्यपतित एवाऽऽनन्दमयः, न पर एवाऽऽत्मा ।

‘आनन्द’ इति विद्याकर्मणोः फलम्, तद्विकार आनन्दमयः । स च विज्ञानमयादान्तरः, यज्ञादिहेतोर्विज्ञानमयादस्यान्तरत्वश्रुतेः । ज्ञानकर्मणोर्हि फलं भोक्त्रर्थत्वादान्तरतमं स्यात् । आन्तरतमश्चाऽऽनन्दमय आत्मा पूर्वेभ्यः । विद्या-

परमात्मत्वासंभवे हेत्वन्तराण्याह—शिरआदीत्यादिना । आनन्दमयस्य परमात्मत्वविवक्षायां, मन्त्रे तस्यैवासत्त्वाशङ्का वक्तव्या; तदसंभवाच्च नाऽऽनन्दमयः परमात्मतया प्रतिपाद्यत इत्याह—मन्त्रोदाहरणानुपपत्तेश्चेति । ‘न हि······मन्त्रोदाहरणमुपपद्यते’ इति संबन्धः।

विशिष्टस्य विशेषणकार्यत्वात्, ‘ सुख्यहम् ’ इत्युपलभ्यमानो भोक्ताऽऽनन्दमय इत्युक्तम्। कथं तस्य विज्ञानमयादान्तरत्वम् ? इत्यत आह—स चेति । कर्त्रपेक्षया भोक्तृत्वस्योत्तरभावित्वं प्रसिद्धमेव श्रुत्योक्तमित्यर्थः । एतत्स्फुटयति—ज्ञानकर्मणोर्हीति । शरीरादिभ्य आनन्दसाधनेभ्यः सकाशात्साध्येनाऽऽनन्देन विशिष्टोऽन्तरतमः प्रसिध्यतीत्यर्थः । किंच, प्रियं

---

( १ ) सुखादि ज्ञानकर्मफलम्, तदात्मकं यदन्तःकरणं, तदुपाधि यत्प्रत्यगात्मनो विज्ञानं—चैतन्याभासः, सोऽत्र ‘ आनन्दमय ’ शब्देनोच्यते । प्रत्यगात्मनः शुद्धस्वभावस्यापि बुद्धौ प्रियादिपरिणामोदये सति तदुपरक्ततया चैतन्याभासो जायते, तदा तदुपाधित्वादविद्ययाऽऽत्मा भोक्ता स्यात् । ( २ ) यथा प्राणमयेन व्याप्ते देहे कृत्स्नेऽपि प्राणकार्यं चलनमुपलभ्यते; यथा च मनोमयेन व्याप्ते प्राणविशिष्टे देहे सर्वस्मिन्नपि मनःकार्यभूता चेतनत्वलक्षणा ज्ञानशक्तिरुपलभ्यते; यथा च विज्ञानमयेन व्याप्ते मनःप्राणोभयविशिष्टे देहे कृत्स्नेऽप्यहं कर्तेति कर्तृत्वमुपलभ्यते; एवमानन्दमयेन व्याप्ते विज्ञानमनःप्राणविशिष्टे देहे हस्तपादादिषु सुखविशेषा उपलभ्यन्ते । तदेतदानन्दमयपूर्णत्वम् । सुखवद्दुःखमपि हस्तादिषूपलभ्यत इति चेदुपलभ्यतां नाम । दुःखात्मकवृत्तिहेतुना मनोमयेन देहस्य पूर्णतया तदुपपत्तेः । दुःखस्य मनोमयधर्मत्वं, सुखस्यानन्दमयधर्मत्वम् । आनन्दो दुःखाभावो न भवति, तदनिरूप्यत्वात् । यद्दुःखेन न निरूप्यते, तद्दुःखाभावो न भवति, यथा घटः । अभावत्वे तु प्रतियोगिनिरूप्यत्वेन दुःखस्मृतिपुरःसरमेव प्रतीयेत । यद्वा, आनन्दोऽयं भावरूपः प्रतियोग्यनिरूप्यत्वात्, घटवत् । यद्वा, आनन्दोऽयं भावरूपः, सातिशयत्वात्, दुःखवत् । स चानन्दः कर्तृत्वभोक्तृत्वोपेतस्यात्मनो मनःसंयोगजन्यः क्षणिको गुण इति वैशेषिकाणां मतम् । बुद्धिसुखदुःखेच्छादीनां नवानां तैरात्मविशेषगुणत्वाङ्गीकारात् । सांख्यास्तु मन्यन्ते—आत्मनोऽसङ्गत्वादिच्छाद्याः प्रकृतिगतगुणत्रयपरिणामाः । तत्र सुखं सत्त्वगुणपरिणामः । प्रवृत्ती रजोगुणपरिणामः । प्रमादस्तमोगुणपरिणामः—इति; तथाच भगवताप्युक्तम्—‘सत्त्वं सुखे संजयति रजः कर्मणि भारत। ज्ञानमावृत्य तु तमः प्रमादे संजयत्युत॥” ( भ. गी. १४.९. ); न्यायैकदेशिनस्त्वेवमाहुः—यद्विषयसुखमस्ति, तद्दुःखानुषङ्गाद्दुःखमेव । त एते वैशेषिकादिपक्षाः पुरुषबुद्धिभिरुत्प्रेक्षिताः । श्रुतिस्त्वात्मस्वरूपभूतस्य नित्यानन्दस्य स्वतन्त्रद्रव्यस्य लेशो विषयानन्द इत्याचष्टे—“ एषोऽस्य परम आनन्दः । एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति ” ( बृ. उ. ४. ३.३२.) इति । यद्यपि प्रियमोदप्रमोदा मनसः करणरूपस्य वृत्तिविशेषतया कर्तृरूपाद्विज्ञानमयाद्बहिर्भूताः, तथाप्यान्तरस्यावच्छिन्नजीवानन्दस्य, अनवच्छिन्नब्रह्मानन्दस्य वा प्रतिबिम्बं धारयन्तीत्यान्तरत्वमभिप्रेत्य विज्ञानमयादभ्यन्तर आत्माऽऽनन्दमय इत्युक्तम् ।

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

मोदो दक्षिणः पक्षः । प्रमोद उत्तरः पक्षः ।
आनन्द आत्मा । ब्रह्म पुच्छं प्रतिष्ठा ।
तदप्येष श्लोको भवति ।

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि ब्रह्म—आनन्द—वल्ल्यां
पञ्चमोऽनुवाकः ॥ ५ ॥

---

कर्मणोः प्रियाद्यर्थत्वाच्च । प्रियादिप्रयुक्ते हि विद्याकर्मणी । तस्मात्प्रियादीनां फलरूपाणामात्मसंनिकर्षाद्विज्ञानमयादस्याभ्यन्तरत्वमुपपद्यते । प्रियादिवासना-निर्वृत्तो ह्यात्मा आनन्दमयो विज्ञानमयाश्रितः स्वप्न उपलभ्यते ।

तस्याऽऽनन्दमयस्याऽऽत्मन इष्टपुत्रादिदर्शनजं प्रियं शिर इव शिरः, प्राधान्यात् । मोद इति प्रियलाभनिमित्तो हर्षः । स एव च प्रकृष्टो हर्षः प्रमोदः । आनन्द इति सुखसामान्यम्, आत्मा प्रियादीनां सुखावयवानां—तेष्वनुस्यूतत्वात्; 'आनन्दः' इति परं ब्रह्म । तद्धि शुभकर्मणा प्रत्युपस्थाप्यमाने पुत्रमित्रादिविषयविशेषोपाधावन्तःकरणवृत्तिविशेषे तमसाऽप्रच्छाद्यमाने प्रसन्नेऽभिव्यज्यते । तद्विषयसुखमिति प्रसिद्धं लोके । तद्वृत्तिविशेषप्रत्युपस्थापकस्य कर्मणोऽनवस्थितत्वात्सुखस्य क्षणिकत्वम् । तेद्यदाऽन्तःकरणं तपसा तमोघ्नेन, विद्यया, ब्रह्मचर्येण, श्रद्धया च निर्मलत्वमापद्यते यावद्यावत्, तावत्तावद्विविक्ते प्रसन्नेऽन्तःकरण आनन्दविशेष उत्कृष्यते, विपुलीभवति । वक्ष्यति च—"रसो वै सः । रस ँ ह्येवायं लब्ध्वाऽऽनन्दी भवति । ......एष ह्येवाऽऽन-

---

च तत्साधनं चोद्दिश्य कर्ता विज्ञानकर्मणी अनुतिष्ठति, तत उद्देश्यत्वादस्याऽऽन्तर्यं सिद्धमित्याह—विद्याकर्मणोरिति । प्रियादिविशिष्टस्य स्वप्ने साक्षिणोपलभ्यत्वाच्च न मुख्यात्मत्वमित्याह—प्रियादिवासनेति ।

यदुक्तं ज्ञानकर्मणोः फलभूत आनन्दमय इति, तस्य साध्यत्वमौपाधिकं स्वमतानुसारेणाऽऽह—आनन्द इति परमिति । कथं तर्हि विषयसुखस्य क्षणिकत्वं, सातिशयत्वं च ? व्यञ्जकवृत्तिनिबन्धनमित्याह—तद्वृत्तिविशेषेति । ब्रह्मण आनन्दस्वभावत्व एव किं प्रमाणमित्यत आह—वक्ष्यति चेति । अन्तःकरणशुद्ध्युत्कर्षादेवाऽऽनन्दस्य सातिशयत्वम्—

---

( १ ) निर्वर्तितः—पाठः । ( २ ) आनन्दः कारणाज्ञाने प्रतिबिम्बितः, बिम्बस्थानीयो वा; आत्मा—शिरःपुच्छयोर्मध्यकायः; ब्रह्म शुद्धम् । कर्मफलस्यानन्दस्य सातिशयत्वान्निरतिशयात्परमानन्दाद्ब्रह्मणोऽर्थान्तरत्वमापतेदित्याशङ्क्याऽऽह—आनन्द इति परं ब्रह्मेति । ( ३ ) तद्यथाऽन्तः° । तद्यदन्तः° । पाठौ ( ४ ) °ते यावत्, तावद्वि° पाठः ( ५ ) अन्तःकरणविशेष आनन्द उ° पाठः ।



CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

न्दयाति;" "एतस्यैवाऽऽनन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" इति च श्रुत्यन्तरात् । एवं च कामोपशमोत्कर्षापेक्षया शतगुणोत्तरोत्तरोत्कर्ष आनन्दस्य वक्ष्यते । एवं चोत्कृष्यमाणस्याऽऽनन्दमयस्याऽऽत्मनः परमार्थब्रह्मविज्ञानापेक्षया ब्रह्म परमेव, यत्प्रकृतं सत्यज्ञानानन्तलक्षणं, यस्य च प्रतिपत्त्यर्थं पञ्चान्नादिमयाः कोशा उपन्यस्ताः, यच्च तेभ्य आभ्यन्तरं, येन च ते सर्वे आत्मवन्तः, तद्ब्रह्म पुच्छं प्रतिष्ठा । तदेव च सर्वस्याविद्यापरिकल्पितस्य द्वैतस्यावसानभूतमद्वैतं ब्रह्म प्रतिष्ठा, आनन्दमयस्यैकत्वावसानत्वात् । अस्ति तदेकमविद्याकल्पितस्य द्वैतस्यावसानभूतमद्वैतं ब्रह्म प्रतिष्ठा पुच्छम् ।

तदेतस्मिन्नप्यर्थ एष श्लोको भवति ।

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवतः कृतौ तैत्तिरीयोपनिषदि ब्रह्म—आनन्द—वल्लीभाष्ये पञ्चमोऽनुवाकः ॥ ५ ॥

---

इत्यत्र लिङ्गमाह—एवं चेति । यदि विषयविशेषजन्यत्वेनाऽऽनन्दोत्कर्षः, तदा निष्कामस्य विषयविशेषोपभोगासंभवादानन्दोत्कर्षो न श्राव्येत । आत्मस्वभावस्यैवाऽऽनन्दस्य व्यञ्जकान्तःकरणशुद्ध्युत्कर्षादेवोत्कर्षः—इत्येवं तु सति, अकामहतत्वोत्कर्षादुत्कर्षः संभाव्यत इत्यर्थः । उक्तप्रकारेण विषयानन्दस्य सातिशयत्वे सति, तद्विशिष्टस्याऽऽनन्दमयस्याब्रह्मत्वं सिद्धम्—सातिशयत्वेन प्रतिशरीरं भिन्नत्वात् । ब्रह्म तु तदध्यासाधिष्ठानमद्वितीयमित्याह—एवं चेति ।

एतस्मिन्नप्यर्थ इति । आनन्दमयस्य प्रतिष्ठाभूतब्रह्मप्रकाशनपर इत्यर्थः ।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दज्ञानविरचिते तैत्तिरीयोपनिषच्छांकरभाष्यटिप्पणे ब्रह्म—आनन्द—वल्ल्यां पञ्चमोऽनुवाकः ॥ ५ ॥

---

(१) तै. उ. २. ७. (२) बृ. उ. ४. ३. ३२. (३) ८ अनुवाके. (४) अनात्मनः—पाठः

(५) विज्ञानध्यानतो नश्येन्मनस्यात्मत्ववासना । विज्ञानात्मत्वमप्येष त्यजेच्छोकयुतत्वतः ॥ ७२ ॥
शोकं तरत्यात्मबोधादिति श्रुत्यन्तरे जगौ । शोकसागरमग्नोऽयं कर्ता तस्यात्मता नहि ॥ ७३ ॥
आनन्दस्यात्मता युक्ता सोऽत्रास्ति प्रीतिदर्शनात् । सदा भूयासमेवेति नित्यं प्रेमात्मनीक्ष्यते ॥ ७४ ॥
आनन्दैकस्वभावोऽपि कर्तृविज्ञानसङ्गमात् । निजानन्दं तिरस्कृत्य कदाचिच्छोकमाप्नुयात् ॥ ७५ ॥
समाधिसुप्तिमूर्च्छासु विज्ञानस्य लये सति । नित्यानन्दस्वरूपेऽस्मिञ्छोकोऽल्पोऽपि न वीक्ष्यते ॥ ७६ ॥
मूर्छासुप्त्योर्यदज्ञानं भाति तत्करणं धियः । कारणे बुद्धिवृत्तौ च स्वानन्दः प्रतिबिम्बति ॥ ७७ ॥
दुःखं राजसधीवृत्तौ सात्त्विक्यां तत्सुखं भवेत् । प्रियं मोदः प्रमोदश्चेत्युच्यते धीसुखं त्रिधा ॥ ७८ ॥
इष्टस्य दर्शनाल्लाभाद्भोगाच्च स्युः प्रियादयः । ते त्रयः कारणानन्द आत्मानन्दश्च पञ्च ते ॥ ७९ ॥
पक्षिणोऽवयवाः पञ्च मूर्द्धाद्यास्तेषु कल्पिताः । आनन्दमयकोशोऽयमुपास्यः पूर्वकोशवत् ॥ ८० ॥
अन्नप्राणमनोविज्ञानानन्दैर्जनिता इमे । कोशास्तेषु क्रमेण स्युरुत्तरोत्तरमान्तराः ॥ ८१ ॥
विज्ञानकोशन्यायेन फलमुन्नीयतामिह । तदुपास्तिफलं चार्थात्तत्त्वबोधफलं भवेत् ॥ ८२ ॥
आनन्दं ब्रह्म विज्ञाय त्यजेदामरणं न चेत् । शरीरे पाप्मनो हित्वा सर्वान्कामानवाप्नुयात् ॥ ८३ ॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

## अथ षष्ठोऽनुवाकः

ब्रह्मपुच्छवाक्ये ब्रह्मणः स्वप्रधानत्वे निगमनश्लोकः

असन्नेव स भवति । असद्ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद्वेद । सन्तमेनं ततो विदुरिति ।

असन्नेवासत्सम एव, यथाऽसन्नपुरुषार्थसंबन्धी, एवं स भवति—अपुरुषार्थसंबन्धी । कोऽसौ ? योऽसदविद्यमानं ब्रह्मेति वेद विजानाति चेद्यदि । तद्विपर्ययेण यत्सर्वविकल्पास्पदं, सर्वप्रवृत्तिबीजं, सर्वविशेषप्रत्यस्तमितमपि, अस्ति तद्ब्रह्मेति वेद चेत् ।

कुतः पुनराशङ्का तन्नास्तित्वे ? व्यवहारातीतत्वं ब्रह्मण इति ब्रूमः । व्यवहारविषये हि वाचारम्भणमात्रेऽस्तित्वभाविता बुद्धिस्तद्विपरीते व्यवहारातीते नास्तित्वमपि प्रतिपद्यते—यथा घटादिर्व्यवहारविषयतयोपपन्नः सन्, तद्विपरीतोऽसन्निति प्रसिद्धम्; एवं तत्सामान्यादिहापि स्याद्ब्रह्मणो नास्तित्वं प्रत्याशङ्का । तस्मादुच्यते—'अस्ति ब्रह्मेति चेद्वेद' इति ।

किं पुनः स्यात्तदस्तीति विजानतः ? तदाह—सन्तं विद्यमानं ब्रह्मस्वरूपेण परमार्थसदात्मापन्नमेनमेवंविदं विदुर्ब्रह्मविदः । ततस्तस्मादस्तित्ववेदनात्सोऽन्येषां ब्रह्मवद्विज्ञेयो भवतीत्यर्थः ।

अथवा यो नास्ति ब्रह्मेति मन्यते, स सर्वस्यैव सन्मार्गस्य वर्णाश्रमादिव्यवस्थालक्षणस्याश्रद्दधानतया नास्तित्वं प्रतिपद्यते, ब्रह्मप्रतिपत्त्यर्थत्वात्तस्य । अतो नास्तिकः सः 'असन्' असाधुरुच्यते लोके । तद्विपरीतः सन्, यः 'अस्ति ब्रह्मेति चेद्वेद,' स तद्ब्रह्मप्रतिपत्तिहेतुं सन्मार्गं वर्णाश्रमादिव्यवस्थालक्षणं श्रद्दधानतया यथावत्प्रतिपद्यते यस्मात्, ततस्तस्मात्सन्तं साधुमार्गस्थमेनं विदुः साधवः । तस्मादस्तीत्येव ब्रह्म प्रतिपत्तव्यमिति वाक्यार्थः ।

---

आनन्दमयकोशेऽस्मिन् पञ्चमावयवः श्रुतः । ब्रह्मशब्देन तद्ब्रह्म स्वात्मानन्द इतीक्ष्यताम् ॥ ८४ ॥
उपासनाच्चित्तशुद्धौ ब्रह्मतत्त्वमवेक्षते । गुहाहितब्रह्मबोधात्सर्वकामाप्तिरीरिता ॥ ८५ ॥
गुहाहितं ब्रह्म यत्तत्सत्यं ज्ञानमिति श्रुतम् । तस्य ज्ञानस्य दृश्यास्ते कोशाः सर्वं जगत्तथा ॥ ८६ ॥

—तैत्तिरीयकविद्याप्रकाशः

(१) "अस्मिंश्च श्लोकेऽननुकृष्यानन्दमयं, ब्रह्मण एव भावाभाववेदनयोर्गुणदोषाभिधानाद्गम्यते 'ब्रह्म पुच्छं प्रतिष्ठा' इत्यत्र ब्रह्मण एव स्वप्रधानत्वमिति । न चानन्दमयस्यात्मनो भावाभावशङ्का युक्ता, प्रियमोदादिविशेषस्यानन्दमयस्य सर्वलोकप्रसिद्धत्वात्" ब्र. सू. भाष्ये १. १. १९.

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

**तस्यैष एव शारीर आत्मा । यः पूर्वस्य ॥**
**अथातोऽनुप्रश्नाः ।**

**तस्य पूर्वस्य विज्ञानमयस्यैष एव शरीरे विज्ञानमये भवः शारीर आत्मा । कोऽसौ ? य एष आनन्दमयः ॥**

**तं प्रति नास्त्याशङ्का नास्तित्वे; अपोढसर्वविशेषत्वात्तु ब्रह्मणो नास्तित्वं प्रत्याशङ्का युक्ता, सर्वसामान्याच्च ब्रह्मणः ।**

---

आनन्दमयस्य प्रकाशकोऽयं श्लोक इति केचन, तान्प्रत्याह—तं प्रतीति । सविशेषतया

---

(१) न चात्रैकदेश्युक्तरीत्या क्लिष्टार्थो ग्राह्यः । यथाश्रुतार्थग्रहणे अनुपपत्त्यभावात् । न च—प्राणमये "तस्यैषः" इत्यस्य यथाश्रुतार्थग्रहणं न संभवति, अन्नरसमयात्मानुक्तेः—इति वाच्यम् । यस्मादन्नरसमय उत्पन्नः, स एव मूलकारणीभूतस्तस्यात्मा भविष्यतीति "तस्यैष एव शारीर आत्मा । यः पूर्वस्य" इत्यनुवादबलादवगन्तुं शक्यत्वात् । स च मूलकारणतया "तस्माद्वा एतस्मादात्मन आकाशः संभूतः" इति निर्दिष्ट एव । ततश्च 'यः पूर्वस्य' इति षष्ठी जन्यजनकभावे । तथाच तस्य प्राणमयस्य 'एष एव शारीर आत्मा' इत्यत्रापि जन्यजनकभावे षष्ठी । शारीरपदं च तस्य जीवाभेदसूचकम् । अयं च जन्यजनकभाव उपादानोपादेयभावरूपेणापि भवतीति "स वा एष पुरुषोऽन्नरसमयः" इति, "अन्योऽन्तर आत्मा प्राणमयः" इत्यात्मपदसामानाधिकरण्यं चोपपद्यते । ततश्च यदुपक्रमे सर्ववस्त्वनुस्यूततया सर्वान्तरत्वं, परिपूर्णत्वं 'अनन्त' पदेन सूचितम्, यच्च "तस्माद्वा एतस्मादात्मन आकाशः संभूतः" इत्यादिना विवृतम्, तदानन्दमयादन्यस्यैवावगम्यते । गुहानिहितत्वरूपमान्तरत्वं यदि ब्राह्मेणैव रूपेण वक्तव्यम्, तदाप्यानन्दमयस्य य आत्मावगतः, तत्रैव तत्पर्यवसानं कल्पनीयम् । तथाच "तस्मादन्योऽन्तर आत्मा" इत्यश्रवणमात्रेण नानन्दमयस्य मान्त्रवर्णिकब्रह्मत्वं वक्तुं शक्यम् । वस्तुतस्तु, उपक्रमे यद्गुहानिहितत्वमुक्तम्, तज्जैवेन रूपेण । तस्य चानन्दमये पर्यवसानं जीवत्व एव लिङ्गम् । द्विप्रकारेण हि ब्रह्मणो गुहानिहितत्वम्—पारमेश्वरेण रूपेण, जैवेन च । तत्रास्य "परमे व्योमन्" इति प्रतिपादनात् परमव्योमाश्रितं गुहानिहितं जैवमेव रूपं सिध्यति । अत्र हि परमव्योमशब्दः परमेश्वरपरः । भृगुवल्ल्यां सप्रपञ्चं ब्रह्मस्वरूपं निरूप्य "सैषा भार्गवी वारुणी विद्या । परमे व्योमन्प्रतिष्ठिता" ( ३. ६. ) इति मन्त्रवाक्यगतपरमव्योमशब्दव्याख्यानत्वेन तस्याः सङ्गमितत्वात् । तदेव चानन्दमयपर्याये गुहानिहितं भविष्यति । अत्रापि हि "ब्रह्मपुच्छं प्रतिष्ठा" इति ब्रह्माश्रितत्वमवगम्यते । आधाराधेयभावेन चानन्दमयस्य ब्रह्मभेदोऽवगम्यते । ततश्च प्रियादिसंबन्ध आनन्दमयेऽक्लेशेनैव वर्णयितुं शक्यते । आनन्दमयस्य ब्रह्मत्वे तु तदपि क्लेशेनैव वर्णनीयं स्यात् ।—ब्रह्मविद्याभरणे आनन्दमयाधिकरणे ।

जगत्कोशाश्च दृश्यत्वात्सन्ति ब्रह्म न दृश्यते । अतो नास्तीत्याह मूढस्तत्सत्तां वक्ति बुद्धिमान् ॥ ८७ ॥
ब्रह्म नास्तीति चेद्वेद स्वयमेव भवेदसत् । कोशात्मता दूषिता चेन्नान्य आत्मास्ति तन्मते ॥ ८८ ॥
आनन्दमयकोशेऽपि प्रियाद्या नश्वरात्मयः । अज्ञानं च ज्ञाननाश्यं न ब्रह्माङ्गीकरोत्यसौ ॥ ८९ ॥
अस्ति ब्रह्मेति चेद्वेद स्वयमेवात्र संभवेत् । अदृश्यस्यापि सत्ता स्यात्स्वप्रकाशत्वसंभवात् ॥ ९० ॥
गौणात्मा पुत्रभार्यादिर्मिथ्यात्मान्नमयादिकः । ब्रह्मानन्दो मुख्य आत्मा क्रमेणैते विवेचिताः ॥ ९१ ॥
उत्तरात्मविवेकेऽस्य पूर्वात्मा देहतां व्रजेत् । तेनोत्तरेण पूर्वस्य पूर्णत्वाद्देहिदेहता ॥ ९२ ॥
सत्येवं निखिलं पूर्वं शरीरं ह्यन्तिमात्मनः । ब्रह्मानन्दस्तु शारीरः पूर्वस्यात्मेति निर्णयः ॥ ९३ ॥

—तैत्तिरीयकविद्याप्रकाशः

(२) सर्वसाम्याच्च—पाठः ।

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

विद्वदविद्वद्विषया ब्रह्मप्राप्तिप्रश्नाः

उताविद्वानमुं लोकं प्रेत्य । कश्चन गच्छती ३ ।
आहो विद्वानमुं लोकं प्रेत्य । कश्चित्समश्नुता३ उ ।

यस्मादेवम्, अतस्तस्मात्, अथानन्तरं श्रोतुः शिष्यस्यानुप्रश्ना आचार्योक्तिमन्वेते प्रश्ना अनुप्रश्नाः ।

सामान्यं हि ब्रह्माऽऽकाशादिकारणत्वाद्विदुषोऽविदुषश्च । तस्मादविदुषोऽपि ब्रह्मप्राप्तिराशङ्क्यते (१) उतापि अविद्वानमुं लोकं परमात्मानमितः प्रेत्य कश्चन—चनशब्दोऽप्यर्थे—अविद्वानपि गच्छति प्राप्नोति ?(२)किंवा न गच्छति ? इति द्वितीयोऽपि प्रश्नो द्रष्टव्यः, 'अनुप्रश्नाः' इति बहुवचनात् । विद्वांसं प्रत्यन्यौ प्रश्नौ—यद्यविद्वान्सामान्यं कारणमपि ब्रह्म न गच्छति, अतो विदुषोऽपि ब्रह्मागमनमाशङ्क्यते । अतस्तं प्रति प्रश्नः 'आहो विद्वान्' इति । (३) विद्वान् ब्रह्मविदपि कश्चिदितः प्रेत्यामुं लोकं समश्नुते प्राप्नोति ? [समश्नुते उ इत्येवं स्थितेऽयादेशे यलोपे च कृतेऽकारस्य प्लुतिः समश्नुता ३ उ इति । उकारं च वक्ष्यमाणमधस्तादपकृष्य, तकारं च पूर्वस्मादुतशब्दाद्यासज्याऽऽहो इत्येतस्मात्पूर्वमुतशब्दं संयोज्य पृच्छ्यत उताऽऽहो विद्वानिति । विद्वान्समश्नुतेऽमुं लोकम्] किंवा (४) यथाऽविद्वान्, एवं विद्वानपि न समश्नुते ? इत्यपरः प्रश्नः ।

द्वावेव वा प्रश्नौ विद्वदविद्वद्विषयौ; बहुवचनं तु सामर्थ्यप्राप्तप्रश्नान्तरापेक्षया घटते । "असद्ब्रह्मेति वेद चेत्", "अस्ति ब्रह्मेति चेद्वेद" इति श्रवणात्, अस्ति नास्तीति संशयः, ततोऽर्थप्राप्तः (१) किमस्ति, नास्ति? इति प्रथमोऽनुप्रश्नः; ब्रह्मणोऽपक्षपातित्वात्, (२) अविद्वान् गच्छति, न गच्छति ? इति द्वितीयः; ब्रह्मणः समत्वेऽप्यविदुष इव विदुषोऽप्यगमनमाशङ्क्य ( ३ ) किं विद्वान्समश्नुते, न समश्नुते ? इति तृतीयोऽनुप्रश्नः ।

---

प्रत्यक्षत्वादित्यर्थः । सर्वेषां साधारणत्वाच्च ब्रह्मणो व्यवहार्यत्वं सर्वान्प्रति भवेत्, न च दृश्यते, ततोऽपि नास्तित्वाशङ्का जायत इत्यर्थः ।

आकाशादिकारणत्वादिति । भूतविशिष्टसर्वजीवकारणत्वादित्यर्थः ।

कस्य सामर्थ्येन प्राप्तं प्रश्नान्तरमित्यत आह—असद्ब्रह्मेतीति । चेच्छब्दात्पाक्षिकसत्त्वावगमसामर्थ्यादित्यर्थः ।

---

( १ ) यतो विदुषोऽविदुषश्च साधारणं ब्रह्म, यतश्चाप्रमेयं—अतः प्रश्ना भवन्तीति 'अतः' शब्दार्थः । आचार्योक्तेरनन्तरमिति 'अनु' शब्दार्थः ।

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

एतेषां प्रतिवचनार्थ उत्तरग्रन्थ आरभ्यते । तत्रास्तित्वमेव तावदुच्यते । यच्चोक्तं " सत्यं ज्ञानमनन्तं ब्रह्म " इति, तत्र च कथं सत्यत्व-मित्येतद्वक्तव्यमितीदमुच्यते—सत्त्वोक्त्यैव सत्यत्वमुच्यते । उक्तं हि " सदेव सत्यम् " इति । तस्मात्सत्त्वोक्त्यैव सत्यत्व-मुच्यते । कथमेवमर्थताऽवगम्यतेऽस्य ग्रन्थस्य ? शब्दानुगमात् । अनेनैव ह्यर्थे-नान्वितान्युत्तरवाक्यानि—" तत्सत्यमित्याचक्षते," "यदेष आकाश आनन्दो न स्यात् " इत्यादीनि ।

उत्तरग्रन्थप्रयोजनम् —उपपत्तिपर्यालोचनम् —मननम्

तत्रासदेव ब्रह्मेत्याशङ्क्यते । कस्मात् ? यदस्ति, तद्विशेषतो गृह्यते, यथा घटादि; यन्नास्ति, तन्नोपलभ्यते, यथा शशविषाणादि; तथा नोपलभ्यते ब्रह्म, तस्माद्विशेषतोऽग्रहणान्नास्तीति । तन्न, आकाशादिकारणत्वाद्ब्रह्मणः—न नास्ति ब्रह्म । कस्मात् ? आकाशादि हि सर्वं कार्यं ब्रह्मणो जातं गृह्यते; यस्माच्च जायते किंचित्, तदस्तीति दृष्टं लोके, यथा घटाङ्कुरादिकारणं मृद्बीजादि; तस्मादाकाशादिकारणत्वादस्ति ब्रह्म । न चासतो जातं किंचिद्गृह्यते लोके कार्यम्; असतश्चेन्नामरूपादिकार्यं, निरात्मकत्वान्नोपलभ्येत; उपलभ्यते तु, तस्मादस्ति ब्रह्म । असतश्चेत्कार्यं गृह्यमाणमप्यसदन्वितमेव तत्स्यात्; न चैवं, तस्मादस्ति ब्रह्म ।

ब्रह्मसद्भावः

तत्र "कथमसतः सज्जायेत " इति श्रुत्यन्तरमसतः सजन्मासंभवमन्वाचष्टे न्यायतः, तस्मात्सदेव ब्रह्मेति युक्तम् ।

तद्यदि मृद्बीजादिवत्कारणं स्यात्, अचेतनं तर्हि ? न, कामयितृत्वात्—न

---

सत्त्वं चेदुपपन्नं ब्रह्मणः, तावतैव सत्यत्वं सिध्यति, सतो बाधासंभवादित्यर्थः । एवमर्थतेति । सत्त्वोपपादनेन सत्यवस्तुविषयतेत्यर्थः ।

ब्रह्मणः सत्त्वसाधनं नामासत्त्वव्यावृत्तिरेवेत्यभिप्रेत्यासत्त्वशङ्कामुद्भावयति—तत्रासदेवेति । विप्रतिपन्नमाकाशादि सत्पूर्वकं, कार्यत्वात्, घटवत्—इति लौकिकव्याप्त्यवष्टम्भेन सत्कारणं तावत्सिद्धम् । तस्य च देशादिकारणत्वेन देशाद्यनवच्छिन्नत्वाद्ब्रह्मपदवाच्यत्वं सिद्धम् । तस्य विशेषतोऽनुपलम्भेनासच्छङ्का जायते, सा कारणत्वेन व्यावर्त्यते, न तु कारणत्वात्सत्त्वं साध्यत आश्रयासिद्धिप्रसङ्गादिति भावः । इतोऽपि जगदुपादाने नासत्त्वाशङ्का कार्येत्याह—न चासत इति ।

न्यायत इति । असदन्वयादर्शनादिति युक्तित इत्यर्थः ।

एवमसत्त्वाशङ्कां निरस्य, अचेतनत्वाशङ्कां प्रधानवादिनः प्रसङ्गान्निराचष्टे—तद्यदीति ।

---

( १ ) छां. उ. ६. २. २. ( २ ) कारणत्वं कार्यापेक्षया नियतप्राक्कालसत्त्वं, तत्र शून्यस्य संभवति ।

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

ब्रह्मणः कामयितृत्वम् हि कामयित्रचेतनमस्ति लोके, सर्वज्ञं हि ब्रह्मेत्यवोचाम, अतः कामयितृत्वोपपत्तिः।

कामयितृत्वादस्मदादिवदनाप्तकाममिति चेत्, न; (१) स्वातन्त्र्यात्,—यथाऽन्यान्परवशीकृत्य, कामादिदोषाः प्रवर्तयन्ति, न तथा ब्रह्मणः प्रवर्तकाः कामाः। कथं तर्हि? सत्यज्ञानलक्षणाः स्वात्मभूतत्वाद्विशुद्धाः, न तैर्ब्रह्म प्रवर्त्यते; तेषां तु तत्प्रवर्तकं ब्रह्म प्राणिकर्मापेक्षया; तस्मात्स्वातन्त्र्यं कामेषु ब्रह्मणः; अतो नानाप्तकामं ब्रह्म।

ब्रह्मण आप्तकामत्वम् —(१) स्वातन्त्र्यात्, —(२) साधनान्तरानपेक्षत्वाच्च

(२) साधानान्तरानपेक्षत्वाच्च।

यथाऽन्येषामनात्मभूता धर्मादिनिमित्तापेक्षाः कामाः स्वात्मव्यतिरिक्त-

---

यद्यपि सांख्यमते चेतनस्य निर्विकारत्वात्कामयितृत्वमसिद्धं, तथाऽपि लौकिकव्याप्तिबलेन कामयितृत्वादचेतनत्वाशङ्का निवर्त्यत इत्याह—न हीति।

तर्हि लौकिकव्याप्तिबलेनैवानाप्तकामत्वमपि प्राप्तमित्याशङ्क्याऽऽह—कामयितृत्वादित्यादिना। जीवानामनाप्तानन्दत्वं परवशत्वात्, न तदस्ति ब्रह्मण इत्यर्थः। कथंभूतास्तर्हि ब्रह्मणः कामा इत्याशङ्कायामाह—सत्यज्ञानलक्षणा इति—सत्यज्ञानं लक्षणं स्वरूपं येषां तेषां ते तथोक्ताः—एतदुक्तं भवति, मायाप्रतिबिम्बितं हि ब्रह्म जगतः कारणं, मायापरिणामैरेव कामैः कामयितृ, तेषां च परिणामानामविद्याद्यनभिभूतचिद्व्याप्तत्वात्सत्यज्ञानात्मकत्वं, ब्रह्मतादात्म्याच्चाधर्माद्यननुस्पृष्टत्वेन शुद्धत्वम्; ततो जीवकामवैलक्षण्यं सिद्धमिति। तर्हि ब्रह्मणः कामाः पुण्यकारिणामप्यनिष्टफलप्राप्त्यनुकूलाः स्युः, स्वातन्त्र्यादित्याशंक्याऽऽह—तेषां त्विति।

कामस्य शरीरादिसंबन्धजन्यत्वप्रसिद्धेः, ब्रह्मणः शरीरादिमत्त्वप्रसङ्गः—इति नाऽऽशङ्कनीयमित्याह—साधनान्तरानपेक्षत्वाच्चेति। कामसंस्कारवत्या मायया ब्रह्मतादात्म्यात्तत्परिणामानां कामानां ब्रह्मतादात्म्यान्न शरीरादिनिमित्तापेक्षाऽस्तीत्यर्थः।

---

(१) सत्यकामः सत्यसंकल्पः—छां. उ. ८. १. ५. (२) °रिक्ताः कार्यकार°—इति पाठः।

(३) श्रवणं मननं चोभे तत्त्वज्ञानस्य साधने। उक्तनिर्णयपर्यन्तं विज्ञानं श्रवणाद्भवेत् ॥ ९४ ॥
अथ स्वबुद्धिदोषेण यतः संदेहसंभवः। अतोऽसौ मननं कुर्यात्संदेहाः सुलयोऽस्य हि ॥ ९५ ॥
ब्रह्मास्ति नो वेत्येकः स्यादज्ञानी मुच्यते न वा। तत्त्वविन्मुच्यते नो वेत्यपरौ संशयावुभौ ॥ ९६ ॥
यदस्ति नामरूपाभ्यां व्याप्तं तद्वियदादिकम्। ब्रह्म निर्नामरूपत्वान्नास्तीत्याह विमूढधीः ॥ ९७ ॥
—तैत्तिरीयकविद्याप्रकाशः

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

सोऽकामयत। बहु स्यां प्रजायेयेति। स तपोऽत
प्यत। स तपस्तप्त्वा। इदꣳ सर्वमसृजत।

कार्यकरणसाधनान्तरापेक्षाश्च, न तथा ब्रह्मणो निमित्ताद्यपेक्षत्वम्। किं तर्हि? स्वात्मनोऽनन्याः।

तदेतदाह—

सोऽकामयत—सः[1] आत्मा, यस्मादाकाशः संभूतः 'अकामयत' कामितवान्। कथं? बहु प्रभूतं, स्यां भवेयम्। कथमेकस्यार्थान्तराननुप्रवेशे बहुत्वं स्यादिति? उच्यते—प्रजायेयोत्पद्येय। न हि पुत्रोत्पत्तेरिवार्थान्तरविषयं बहुभवनम्। कथं तर्हि? आत्मस्थानभिव्यक्तनामरूपाभिव्यक्त्या। यदाऽऽत्मस्थे अनभिव्यक्ते नामरूपे व्याक्रियेते, तदा आत्मस्वरूपापरित्यागेनैव ब्रह्मणोऽप्रविभक्तदेशकाले[2] सर्वावस्थासु व्याक्रियेते—तदेतन्नामरूपव्याकरणं ब्रह्मणो बहुभवनम्; नान्यथा निरवयवस्य ब्रह्मणो बहुत्वापत्तिरुपपद्यतेऽल्पत्वं वा—यथाऽऽकाशस्यालपत्वं बहुत्वं च वस्त्वन्तरकृतमेव; अतस्तद्द्वारेणैवाऽऽत्मा बहु भवति। न ह्यात्मनोऽन्यदनात्मभूतं, तत्प्रविभक्तदेशकालं, सूक्ष्मं, व्यवहितं, विप्रकृष्टं, भूतं, भविष्यद्वा[3] वस्तु विद्यते; अतो नामरूपे सर्वावस्थे ब्रह्मणैवाऽऽत्मवती, न ब्रह्म तदात्मकम्। ते तत्प्रत्याख्याने न स्त एवेति तदात्मके उच्येते। ताभ्यां चोपाधिभ्यां ज्ञातृज्ञेयज्ञानशब्दार्थादिसर्वसंव्यवहारभाग्ब्रह्म।

(margin notes: ब्रह्मणः सिसृक्षा; मायामात्रमिदं द्वैतम्)

स आत्मैवंकामः संस्तपोऽतप्यत। 'तपः' इति ज्ञानमुच्यते—"यस्य[4] ज्ञानमयं तपः" इति श्रुत्यन्तरात्, आप्तकामत्वाच्चेतरस्यासंभव एव तपसः[5]। तत्तपोऽतप्यत तप्तवान्। सृज्यमानजगद्रचनादिविषयामालोचनामक-

(margin note: ब्रह्मणः पर्यालोचकत्वम्)

तद्द्वारेणैवेति। नामरूपशक्त्यात्मकमायापरिणामद्वारेणैव। नामरूपशक्त्यात्मिका जडरूपा मायाऽङ्गीकृता चेत्, तर्हि सा प्रधानवत्पृथक्सतीत्यद्वैतहानिरित्याशङ्क्याऽऽह—नहीति। आत्मातिरिक्तं किं स्वतः सिद्ध्यति, परतो वा? नाऽऽद्यः—जाड्यहानेरतिरेकहानेश्च। न द्वितीयः—प्रमासंसर्गानिरूपणात्। न च भिन्नदेशकालयोः संयोगादिः संभवति,

(१) 'तस्माद्वा एतस्मादाकाशः संभूतः' इत्यत्र पुल्लिंगेनापि 'आत्म'शब्देन ब्रह्मणः प्रकृतत्वात् पुल्लिंगनिर्देश उपपद्यते। (२) ब्रह्मणाऽप्र °—पाठः। (३) तुल्य-चोदना हि भूतं, भवन्तं, भविष्यन्तं, सूक्ष्मं, व्यवहितं, विप्रकृष्टमित्येवंजातीयकमर्थं शक्नोत्यवगमयितुं, नान्यत्किंचनेन्द्रियम्। (शबरभाष्ये १. २. २.) (४) मुं. उ. १. १. ९. (५) °सः। स तपोऽ°—इति पाठः।

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

यदिदं किंच । तत्सृष्ट्वा । तदेवानुप्राविशत् ।

रोदात्मेत्यर्थः । स एवमालोच्य तपस्तप्त्वा प्राणिकर्मादिनिमित्तानुरूपमिदं सर्वं जगद्देशतः, कालतः, नाम्ना, रूपेण च यथानुभवं सर्वैः प्राणिभिः सर्वावस्थैरनुभूयमानमसृजत सृष्टवान् ।

यदिदं किंच यत्किंचेदमविशिष्टम्, तदिदं जगत्सृष्ट्वा किमकरोदिति ? उच्यते—तदेव सृष्टं जगदनुप्राविशदिति ।

---

विषयविषयिभावो वा—नियामकगवेषणात् । न च स्वभाव एव संबन्धः—द्वयोः स्वभावयोः संबन्धत्वेनैवोपक्षये संबन्ध्यभावप्रसङ्गात् । न हि स्वात्मानं प्रति स्वस्यैव संबन्धित्वम्—आत्माश्रयापातात् । तथाविधार्थाभावे व्यवहारमात्रप्रवर्तकत्वे च मिथ्याव्यवहारापातात्, अनिर्वचनीयवाद एव पर्यवस्यतीति भावः । यस्मादात्मातिरिक्तं वस्तु न संभाव्यते, तस्मादात्मतादात्म्येनैव नामरूपयोः सिद्धिरित्याह—अत इति । तर्हि ब्रह्मणः सप्रपञ्चताप्रसङ्ग इति न वाच्यमित्याह—न ब्रह्मेति । न ब्रह्म तदात्मकम्—अजडत्वात्, तत्परिहारेणापि सिद्धिसंभवादित्यर्थः । कथं तर्हि ते ब्रह्मात्मके ? तत्राऽऽह—ते तादिति ! स्वप्नावबुद्धनभोभक्षणवदारोपितस्यानुभवप्रत्याख्यानेन सिद्ध्यसंभवात्, अनुभाव्ये नामरूपे अनुभवा-

---

(१) तुलय—" अस्य जगतो नामरूपाभ्यां व्याकृतस्यानेककर्तृभोक्तृसंयुक्तस्य प्रतिनियतदेशकालनिमित्तक्रियाफलाश्रयस्य मनसाप्यचिन्त्यरचनारूपस्य जन्मस्थितिभङ्गं यतः सर्वज्ञात्सर्वशक्तेः कारणाद्भवति तद्ब्रह्म " —ब्र. सू. १. १. २. भाष्ये । कार्यप्रपञ्चं केचित्कथंचित् स्वप्रक्रियानुसारेण विभजन्ति । वेदान्तिनस्तु "त्रयं वा इदं नाम, रूपं, कर्म " ( बृ. उ. १. ६. १. ); " नामरूपे व्याकरवाणि " (छां. उ. ६. ३. २.) इति श्रुतिद्वयमाश्रित्य त्रैविध्यं, द्वैविध्यं वाऽङ्गीकुर्वन्ति । चेतनो हि बुद्धावालिख्य नामरूपे, घट इति नाम्ना, रूपेण च कम्बुग्रीवादिना, बाह्यं घटं निष्पादयति । एवमेव मूलकारणमपि नामरूपाभ्यां स्वबुद्धावाविर्भूतमेव सर्वं पश्चाद्व्यनक्तीति नामरूपाभ्यामित्थं भूतं व्याकृतमित्युच्यते । केचित्कर्तारो भवन्ति—यथा सूदर्त्विगादयः, न भोक्तारः; केचित्तु भोक्तारः—यथा श्राद्धवैश्वानरीयेष्ट्यादिषु पितापुत्रादयः, न कर्तारः । केचित्खलु प्रतिनियतदेशोत्पादाः—यथा कृष्णमृगादयः; केचित्प्रतिनियतकालोत्पादाः—यथा कोकिलारवादयः; केचित्प्रतिनियतनिमित्ताः—यथा नवाम्बुदध्वानादिनिमित्ता बलाकागर्भादयः; केचित्प्रतिनियतक्रियाः—यथा ब्राह्मणानां याजनादयः, नेतरेषाम् । एवं प्रतिनियतफलाः—यथा केचित्सुखिनः, केचिद्दुःखिनः; एवं य एव सुखिनस्त एव कदाचिद्दुःखिनः । सर्वमेतदाकस्मिकापरनाम्नि यादृच्छिकत्वे च, स्वाभाविकत्वे च, असर्वशक्तिकर्तृकत्वे च न घटते । नाम्ना रूपेण चेति ' इत्थंभावे तृतीया ' । चित्प्रकाशस्य च स्वस्यार्थस्य च विषयविषयिभावादिलक्षणो यः संबन्धः, तस्मादपि चेत्यप्रपञ्चस्यावभासो न युक्तः । तादृशस्य संबन्धस्यैवानिरूपणात्, विषयविषयिभावलक्षणसंबन्धस्य संबन्धान्तरमूलत्वात्, तदनङ्गीकारेऽस्य ज्ञानस्यायमेव विषय इति नियमानुपपत्तेः, अवश्यं मूलभूतः संबन्धो वक्तव्यः । स च संयोगसमवायतादात्म्यादिलक्षणः । तथा च ज्ञानार्थयोस्तादृशः संबन्धो दुर्निरूप इति विषयविषयिभावो न युक्त इत्यर्थः । एवं च " सत्यं ज्ञानमनन्तं ब्रह्म " (२.१.) इत्यादिश्रुतेस्त्वनाद्यनन्ता ब्रह्मस्वरूपभूता स्वप्रकाशा या चित्, तस्यामनाद्यविद्यावशा-

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

तत्रैतच्चिन्त्यं—कथमनुप्राविशदिति । किं यः स्रष्टा, स तेनैवाऽऽत्मनाऽनुप्राविशत्, उतान्येनेति ? किं तावद्युक्तम् ? क्त्वाप्रत्ययश्रवणात्, यः स्रष्टा, स एवानुप्राविशदिति ।

ब्रह्मणो मायिकः सगप्रवेशः

ननु न युक्तं, मृद्वच्चेत्कारणं ब्रह्म—तदात्मकत्वात्कार्यस्य; कारणमेव हि कार्यात्मना परिणमते; अतोऽप्रविष्टस्यैव कार्योत्पत्तेरूर्ध्वं पृथक्कारणस्य पुनः प्रवेशोऽनुपपन्नः—न हि घटपरिणामव्यतिरेकेण मृदो घटे प्रवेशोऽस्ति । (१)यथा घटे चूर्णात्मना मृदोऽनुप्रवेशः, एवमनेनाऽऽत्मना नामरूपकार्येऽनुप्रवेश आत्मन इति चेत्, श्रुत्यन्तराच्च “ अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य ” इति । नैवं युक्तम्, एकत्वाद्ब्रह्मणः; मृदात्मनस्त्वनेकत्वात्सावयवत्वाच्च युक्तो

---

त्मकब्रह्मात्मके कथ्येते, न त्वैक्याभिप्रायेणेत्यर्थः । न केवलं ब्रह्मणो बहुरूपत्वं, मायोपाधिकं सर्वव्यवहारास्पदत्वं चेत्याह—तान्यामिति ।

प्रवेशस्यानिर्वाच्यताद्योतनेन जीवस्य ब्रह्मात्मतायां प्रवेशवाक्यस्य तात्पर्यं दर्शयितुं विचारमारभते—तत्रैतच्चिन्त्यमित्यादिना । विमर्शे सति, क्त्वाश्रुत्यनुरोधात्स्रष्टुरेव प्रवेश इत्युक्तं सिद्धान्तिना ।

पूर्ववाद्याह—ननु न युक्तमिति । सृष्टिप्रवेशक्रिययोः पूर्वापरकालीनत्वसंभवे सति कर्त्रैक्यं क्त्वाश्रुत्या बोध्येत, न तु प्रवेशस्योत्तरकालता संभवति—सृष्टिसमय एवोपादानस्य कार्यात्मनाऽवस्थितत्वादित्यर्थः । एतदेव विवृणोति—कारणमेव हीति । अप्रविष्टे यथा मठादौ देवदत्तस्य प्रवेशो दृष्टः, तथा कार्योत्पत्तेरूर्ध्वं पृथक्प्रवेशो न संभवतीत्यर्थः ।

---

चेत्यप्रपञ्चोऽध्यस्ततयैव प्रतीयते—इत्यवश्यमङ्गीकर्तव्यम् । ततश्चौपाधिक एव चितो नानात्वावभासः । यत एवं ज्ञानार्थयोः परमार्थतः संबन्धाभावः, ततश्चेत्यप्रपञ्चस्य चिद्रूपेऽध्यस्ततयैव प्रतीतिर्वक्तव्या । तथाच जलतरङ्गबुद्बुदादिनानाविधोपाधिसंबन्धवशादेकमेव चन्द्रस्वरूपं भिन्नं प्रतीयते, तथा स्वात्मन्यध्यस्तनानाविधचेत्योपाधिसंबन्धवशादधिष्ठानभूता चिदपि भिद्यते । अतश्चितो भेदप्रतीतिश्चेत्यघटपटादिभेदनिबन्धनैव, न तु पारमार्थिकीत्यर्थः ।

(१) ब्र. सू. १. ४. २२. (२) अन्येन—पाठः । (३) छां. उ. ६. ३. २.

(४) विवेकी ब्रह्मणः सत्तां सृष्टिकामादिहेतुभिः । साधयन् बहुधा मूढं बोधयेन्मोहनुत्तये ॥ ९८ ॥
अकामयत सृष्ट्यादौ परमात्मा स्वमायया । बहुस्यामहमेवातः प्रजायेयेति कामना ॥ ९९ ॥
स्वस्यैव बहुधा चोक्तेरुपादानं मृदादिवत् । तथा कामयितृत्वे न निमित्तत्वं कुलालवत् ॥ १०० ॥
निर्धर्मकेऽप्यात्मतत्त्वे निमित्तत्वं स्वमायया । उपादानत्वसहितं माया दुर्घटकारिणी ॥ १०१ ॥
असंभाव्यं न मायायामुपलम्भं न साऽर्हति । ततो वेदो यथा ब्रूते सृष्टिरेषा तथेष्यताम् ॥ १०२ ॥
सृज्यमालोचयन् सर्वमसृजत्परमेश्वरः ।

—तैत्तिरीयकविद्याप्रकाश

(९) °त्मतया प्र°—इति पाठः ।

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

घटे मृदश्चूर्णात्मनाऽनुप्रवेशः, मृदश्चूर्णस्याप्रविष्टदेशवत्त्वाच्च; न त्वात्मनः, एकत्वे सति निरवयवत्वादप्रविष्टदेशाभावाच्च, प्रवेश उपपद्यते । कथं तर्हि प्रवेशः स्यात्? युक्तश्च प्रवेशः, श्रुतत्वात् 'तदेवानुप्राविशत्' इति; (२) सावयवमेवास्तु, तर्हि सावयवत्वान्मुखे हस्तप्रवेशवन्नामरूपकार्ये जीवात्मनाऽनुप्रवेशो युक्त एवेति चेत्, न; अशून्यदेशत्वात्;—न हि कार्यात्मना परिणतस्य नामरूपकार्यदेशव्यतिरेकेणाऽऽत्मशून्यः प्रदेशोऽस्ति, यं प्रविशेज्जीवात्मना । (३) कारणमेव चेत्प्रविशेत्, जीवात्मत्वं जह्यात्—यथा घटो मृत्प्रवेशे घटत्वं जहाति; 'तदेवानुप्राविशत्'—इति च श्रुतेर्न कारणानुप्रवेशो युक्तः ।

(४) कार्यान्तरमेव स्यादिति चेत्,—'तदेवानुप्राविशत्'—इति जीवात्मरूपं कार्यं नामरूपपरिणतं कार्यान्तरमेवाऽऽपद्यत इति चेत्, न;—(१) विरोधात्, न हि घटो घटान्तरमापद्यते; (२) व्यतिरेकश्रुतिविरोधाच्च—जीवस्य नामरूपकार्यव्यतिरेकानुवादिन्यः श्रुतयो विरुध्येरन्; (३) तदापत्तौ मोक्षासंभवाच्च,—न हि यतो मुच्यमानस्तदेवाऽऽपद्यते, न हि शृङ्खलापत्तिर्बद्धस्य तस्करादेः ।

(५) बाह्यान्तरभेदेन परिणतमिति चेत्—तदेव कारणं ब्रह्म शरीराद्याधारत्वेन तदन्तर्जीवात्मनाऽऽधेयत्वेन च परिणतमिति चेत्—न; बहिष्ठस्य प्रवे-

सिद्धान्त्येकदेशिनां मतमुद्भाव्य पूर्ववादी दूषयति—यथा घट इत्यादिना । स्रष्टुरन्यस्य वा प्रवेशो न संभवतीति चेत्, कथं तर्हि प्रवेशो वाच्यः?—इति सिद्धान्त्येकदेश्याह—कथमिति । नास्त्येवेति न वक्तव्यमित्याह—युक्तश्चेति । स एवाऽऽह गतिम्—सावयवमेवेति । पूर्ववादी दूषयति—न, अशून्यत्वादिति । कार्यात्मना परिणतस्य ब्रह्मणो नामरूपात्मकं कार्यमेव देशः, तद्व्यतिरेकेण न ह्यन्यः प्रदेशोऽस्ति । यत्कारणमेव कार्याकारेण परिणतं, तत्प्रति कार्यविशेषो जीवात्मा प्रवेक्ष्यतीति न शङ्कनीयमित्याह—कारणमेव चेदिति । कार्यविशेषस्य प्रवेशमङ्गीकृत्य दूषणमुक्तम्; स न संभवति—श्रुतिविरोधादित्याह—तदेवेति ।

कारणपरामर्शकेन तच्छब्देन कार्यमुपलक्ष्य, कार्यान्तरस्य तत्र प्रवेशो विधीयतेऽप्राप्तदेशसंभवात्; अतो न श्रुतिविरोध इति सिद्धान्तैकदेशिमतमुद्भाव्य दूषयति—कार्यान्तरमेवेत्यादिना ।

कारणवाचकेन तच्छब्देन कार्यलक्षणायामविवक्षितलक्षणा चेत्प्रसज्येत, तर्हि कारणपर एव तच्छब्दोऽस्त्वित्याहान्यः सिद्धान्तैकदेशी—बाह्येति । अस्मिन्पक्षे प्रवेशश्रुते-

(१) अहंकारादिकार्यात्मकत्वम् । (२) °वात्मना प्र°—इति पाठः ।

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

शोपपत्तेः—न हि यो यस्यान्तःस्थः, स एव तत्प्रविष्ट उच्यते; बहिष्ठस्यानुप्रवेशः स्यात्, प्रवेशशब्दार्थस्यैवं दृष्टत्वात्—यथा गृहं कृत्वा प्राविशदिति। (१) जलसूर्यकादिप्रतिबिम्बवत्प्रवेशः स्यादिति चेत्, न; अपरिच्छिन्नत्वात्, अमूर्तत्वाच्च—परिच्छिन्नस्य मूर्तस्यान्यस्यान्यत्र प्रसादस्वभावके जलादौ सूर्यकादिप्रतिबिम्बोदयः स्यात्; न त्वात्मनः, अमूर्तत्वात्, आकाशादिकारणस्याऽऽत्मनो व्यापकत्वात्; तद्विप्रकृष्टदेशप्रतिबिम्बाधारवस्त्वन्तराभावाच्च प्रतिबिम्बवत्प्रवेशो न युक्तः।

एवं तर्हि नैवास्ति प्रवेशः, न च गत्यन्तरमुपलभामहे—"तदेवानुप्राविशत्" इति श्रुतेः। श्रुतिश्च नोऽतीन्द्रियविषये विज्ञानोत्पत्तौ निमित्तम्। न चा-

---

मुख्यार्थो न लभ्येतेत्याह—न बहिष्ठेति। अन्यस्य वेदान्तिनो मतमुद्भाव्य दूषयति—जल इत्यादिना।

एवं सिद्धान्तैकदेशीयं निरस्य पूर्ववाद्युपसंहरति—एवं तर्हीति। नैवास्ति प्रवेशो ब्र-

---

(१) न च, अवच्छेदपक्षे "यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन्। उपाधिनाऽक्रियभेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा।", "अत एव चोपमा सूर्यकादिवत्" (ब्र. सू. ३. २. १८.) इति श्रुतिसूत्रविरोध इति वाच्यम्। भाष्यकारैरेव 'अत एव' इति सूत्रं व्याख्याय, सूर्यादिवदात्मनः प्रतिबिम्बो न युज्यते—इति तदाक्षेपकत्वेन "अम्बुवदग्रहणात्तु न तथात्वम्" (ब्र. सू. ३. २. १९.) इति सूत्रं व्याख्याय, ततः "वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम्" (२०) इति सूत्रेणोक्तानुपपत्त्यात्मनः प्रतिबिम्बमनुपपन्नमित्यङ्गीकृत्यैव श्रुतिषु सूर्यादिप्रतिबिम्बोपादानस्य तात्पर्यान्तरवर्णनपरताया उक्तत्वात्। बृहदारण्यकभाष्येऽपि "स एष इह प्रविष्ट आनखाग्रेभ्यः" (बृ. उ. १. ४. ७.) इति वाक्यव्याख्यानावसरे सर्वगतस्यात्मनः कः प्रवेशो नाम?—इति विमृश्य 'प्रतिबिम्बनं प्रवेशः'—इति पक्षं विप्रकृष्टदेशाद्यभावेनैव दूषयित्वा, देहादावात्मन उपलभ्यमानत्वं प्रवेशः, नहि पाषाणादाविव देहादावात्मनोऽनुपलब्धिरस्तीति प्रवेशपदार्थस्यान्यथोपपादनेन प्रतिबिम्बपक्षदूषणं स्थिरीकृतम्। यद्यपि "आभास एव च" (ब्र. सू. २. ३. ५०.) इति सूत्रेण "आभास एव चैष जीवः परस्यात्मनो जलसूर्यकादिवत्प्रतिपत्तव्यः' इति तद्भाष्येण च प्रतिबिम्बपक्ष उक्त इति प्रतिभाति, तथापि परमाप्तयोः सूत्रकारभाष्यकारयोरेकत्र जीवस्य प्रतिबिम्बत्वस्वीकारः, अन्यत्र तन्निराकरणं च न संभवतीति किंचिदनुरोधेन कस्मिंश्चिद्व्याख्यातव्ये प्रतिबिम्बत्वनिराकरणस्य युक्तियुक्तत्वेन "आभासः' इति सूत्रे भाष्यकृद्भिरपि श्रुत्योपपत्त्या प्रतिबिम्बत्वस्यासमर्थितत्वात्, तदेव सूत्रं, तद्भाष्यं च "वृद्धिह्रासभाक्त्वम्" इति सूत्रोक्तन्यायात् "अतश्च यथानैकस्मिञ्जलसूर्यके कम्पमाने जलसूर्यकान्तरं कम्पते, एवं नैकस्मिञ्जीवे कर्मफलसंबंधिनि जीवान्तरस्य तत्संबन्धः" इति तदधिकरणभाष्ये प्रतिबिम्बस्य दृष्टान्तत्वेनोक्तत्वाच्च प्रतिबिम्बसादृश्यप्रतिपादनपरं व्याख्येयम्। तस्मात्प्रतिबिम्बासंभवादवच्छेदपक्षे विरोधाभावात्, साधकस्य सत्त्वाच्च, अवच्छेद्यचैतन्यस्य प्रतिबिम्बपक्षेऽपि संमतत्वेनोभयसंप्रतिपन्नत्वेन लाघवात् तस्यैव जीवत्वकल्पनौचित्यात्, सर्वगतस्य चैतन्यस्यान्तःकरणादिनावच्छेदोऽवश्यंभावीत्यावश्यकत्वादवच्छेदो जीव इति।—भाष्योत्कर्षदीपिका. ७. १४. (२) (२) तुल्य— "श्रुतिश्च नः प्रमाणमतीन्द्रियार्थविज्ञानोत्पत्तौ।" शां. भा. २. ३. १.

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

स्माद्वाक्याद्यत्नवतामपि विज्ञानमुत्पद्यते। हन्त! तर्ह्यनर्थकत्वादपोह्यमेतद्वाक्यं "तत्सृष्ट्वा तदेवानुप्राविशत्" इति। न, अन्यार्थत्वात्। किमर्थमस्थाने चर्चा? प्रकृतो ह्यन्यो विवक्षितोऽस्य वाक्यस्यार्थोऽस्ति, स स्मर्तव्यः—"ब्रह्मविदाप्नोति परम्", "सत्यं ज्ञानमनन्तं ब्रह्म", "यो वेद निहितं गुहायाम्" इति। तद्विज्ञानं च विवक्षितम्; प्रकृतं च तत्। ब्रह्मस्वरूपानुगमाय चाऽऽकाशाद्यन्नमयान्तं कार्यं प्रदर्शितं, ब्रह्मानुगमश्चाऽऽरब्धः—तत्रान्नमयादात्मनोऽन्योऽन्तर आत्मा प्राणमयः, तदन्तर्मनोमयः, विज्ञानमय इति विज्ञानगुहायां प्रवेशितः; तत्र चाऽऽनन्दमयो विशिष्ट आत्मा प्रदर्शितः। अतः परमानन्दमयलिङ्गाधिगमद्वारेणाऽऽनन्दविवृद्ध्यवसान आत्मा—'ब्रह्म पुच्छं प्रतिष्ठा'—सर्वविकल्पास्पदः, निर्विकल्पोऽस्यामेव गुहायामधिगन्तव्य इति तत्प्रवेशः प्रकल्प्यते।

ब्रह्मात्मैकत्वस्वरूपानुगमार्थमनिर्वाच्यप्रवेशवचनम्

न ह्यन्यत्रोपलभ्यते ब्रह्म, निर्विशेषत्वात्—विशेषसंबन्धो ह्युपलब्धिहेतुर्दृष्टः, यथा राहोश्चन्द्रार्कविशिष्टसंबन्धः। एवमन्तःकरणगुहात्मसंबन्धो ब्रह्मण उपलब्धिहेतुः—संनिकर्षात्, अवभासात्मकत्वाच्चान्तःकरणस्य; यथा चाऽऽलोकवि-

---

ह्मणः, ततोऽन्यस्यापि प्रवेशो न संभवतीत्युक्तमित्याह—न चेति। इतरस्यापि प्रवेशः कल्पयितुं न शक्यत इत्याह—तदेवानुप्राविशदिति। सा च श्रुतिः स्रष्टुः प्रवेशमाह, सा चास्माकं मीमांसकानां प्रमाणं, ततस्तद्विरोधेनान्यस्य प्रवेशकल्पनाऽयुक्तेति भावः। तर्हि श्रुतिशरणतयैव ब्रह्मण एव प्रवेश उच्यतामित्याशङ्क्याऽऽह—न चेति। तस्मात् 'अन्धो मणिमविन्दत्' इतिवदर्थशून्यमेवेदं वाक्यमिति निगमयति—हन्तेति। शक्तिगोचरस्यार्थस्यासंभवादर्थशून्यत्वं, तात्पर्यगोचरस्य वा? नाऽऽद्यः—आकाशादेरविप्रकृष्टदेशेऽपि जलेऽमूर्तस्य प्रतिबिम्बभाववदमूर्तस्यापि ब्रह्मणोऽनिर्वाच्याविद्यासु प्रतिबिम्बितस्य सृष्ट्युत्तरकालमन्तःकरणादिषु प्रतिबिम्बभावसंभवादित्याह—नेति। न द्वितीय इत्याह—अन्यार्थत्वादिति। एतत्स्फुटयति—किमर्थमित्यादिना। अतः परमिति। बुद्धिगुहाप्रवेशादनन्तरमानन्दमय एव विशिष्टोऽर्थो विशेष्यस्य चिद्धातोर्लिङ्गं, विशिष्टस्य विशेष्याव्यभिचारदर्शनात्—तदधिगमद्वारेणाऽऽनन्दविवृद्ध्यवसान आत्मा ब्रह्मरूपोऽस्यामेव गुहायामधिगन्तव्य इत्यभिप्रेत्य जले सूर्यप्रवेशवदनिर्वाच्यः प्रवेशोऽभिधीयत इत्यर्थः।

बुद्धिगुहायामेव ब्रह्मण उपलब्धिसंभवात्, तत्रैव प्रवेशोऽभिधित्सित इत्याह—न हीति। नन्वन्यत्रोपलब्ध्यनर्हं ब्रह्म बुद्धौ वा कथमुपलभ्यत इत्याशङ्क्योपाधेर्योग्यताविशेषसंभवादि-

---

(१) °पावगमाय—पाठः (२) °ह्यावगम° पाठः। (३) तै. आ. १. ११. ५. (४) °लिङ्गवि°—इति पाठः। (५) °शेष्यस्याव्य°—इति पाठः।

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

तदनुप्रविश्य । सच्च त्यच्चाभवत् । निरुक्तं चा-
निरुक्तं च । निलयनं चानिलयनं च । वि-
ज्ञानं चाविज्ञानं च । सत्यं चानृतं च सत्य-
मभवत् ।

शिष्टघटाद्युपलब्धिः, एवं बुद्धिप्रत्ययालोकविशिष्टात्मोपलब्धिः स्यात् । तस्मा-द्उपलब्धिहेतौ 'गुहायां निहितम्' इति प्रकृतमेव । तद्वृत्तिस्थानीये त्विह पुनः 'तत्सृष्ट्वा तदेवानुप्राविशत्' इत्युच्यते ।

तदेवेदमाकाशादिकारणं कार्यं सृष्ट्वा तदनुप्रविष्टमिवान्तर्गुहायां बुद्धौ द्रष्टृ, श्रोतृ, मन्तृ, विज्ञात्रित्येवं विशेषवदुपलभ्यते । स एव तस्य प्रवेशः । तस्मा-दस्ति तत्कारणं ब्रह्म, अतोऽस्तित्वात्, 'अस्ति' इत्येवोपलब्धव्यं तत् ।

तत्कार्यमनुप्रविश्य किं ? सच्च मूर्तं, त्यच्चामूर्तमभवत्—मूर्तामूर्ते ह्यव्याकृते नामरूपे आत्मस्थे अन्तर्गतेनाऽऽत्मना व्याक्रियेते[३]; व्याकृते च मूर्तामूर्तशब्दवाच्ये ते आत्मना त्वप्रविभक्तदेशकाले इति कृत्वा, आत्मा ते अभ-वदित्युच्यते । किंच निरुक्तं चानिरुक्तं च—निरुक्तं नाम निष्कृष्य समानासमा-नजातीयेभ्यो देशकालविशिष्टतयेदं तदित्युक्तम्; अनिरुक्तं तद्विपरीतम् । निरु-क्तानिरुक्ते अपि मूर्तामूर्तयोरेव विशेषणे । यथा सच्च त्यच्च प्रत्यक्षपरोक्षे, तथा

परोक्षापरोक्षे मूर्तामूर्ते

---

त्याह—विशेषेति । संनिकर्षादिति—अन्तःकरणसंसर्गादेव देहघटादिषु चैतन्याभिव्यक्तिः, न स्वतः—अन्तःकरणं चाव्यवधानेनैव चैतन्याभिव्यञ्जकमन्वयव्यतिरेकाभ्यामित्यर्थः । यथा चास्वच्छस्वभावके घटादौ मुखं न प्रतिबिम्बते, जलादौ स्वच्छस्वभावके प्रतिबिम्बते, तथा सत्त्वप्रधानस्यान्तःकरणस्य प्रसादस्वाभाव्याद्घटते तत्र ब्रह्मोपलब्धिरित्याह—अवभा-सात्मकत्वाच्चेति । किंच यथा जाड्यसाम्येऽपि तमोलक्षणावरणाभिभवसमर्थ आलोकोऽङ्गी-क्रियते, तथा जाड्यसाम्येऽप्यन्तःकरणस्यैव प्रत्ययाकारपरिणतस्याज्ञानलक्षणावरणाभिभव-सामर्थ्यमङ्गीकर्तव्यमित्याह—यथा चेति ।

'निलयनं' गृहप्रासादादिमूर्तसंनिवेशविशेषः; अवयवसंस्थानविशेषराहित्यम् 'अनिल-

---

(१) तुलय—बृ. उ. वार्तिकम्—१. ४. ४९६—६२३. स्वाज्ञानादेव स्रजो भुजगे प्रवेशः, न वस्तुतोऽस्ति—इति स्रगतिरिक्तसर्पासत्त्ववत् प्रतीचोऽपि स्वाज्ञानोत्थे जगति तद्वशादेव प्रवेशः, न परमार्थतः—इति प्रत्यगात्मैव वस्तु, न जगदिति स्थितमित्यर्थः । (२) कठ. उ. ६. १३. (३) °ते मू°—पाठः । (४) °मूर्तं सं°—इति पाठः ।

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

यदिदं किंच । तत्सत्यमित्याचक्षते ।
तदप्येष श्लोको भवति ।

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि ब्रह्म—आनन्द—वल्ल्यां
षष्ठोऽनुवाकः ॥ ६ ॥

---

निलयनं चानिलयनं च—निलयनं नीडमाश्रयो मूर्तस्यैव धर्मः; अनिलयनं तद्विपरीतममूर्तस्यैव धर्मः । 'त्यदनिरुक्तानिलयनानि' अमूर्तधर्मत्वेऽपि व्याकृतविषयाण्येव—सर्गोत्तरकालभावश्रवणात्; त्यदिति प्राणाद्यनिरुक्तं, तदेवानिलयनं च; अतो विशेषणान्यमूर्तस्य व्याकृतविषयाण्येवैतानि । विज्ञानं चेतनम्, अविज्ञानं तद्रहितमचेतनं पाषाणादि । सत्यं च व्यवहारविषयम्—अधिकारात्, न परमार्थसत्यम्; एकमेव हि परमार्थसत्यं ब्रह्म । इह पुनर्व्यवहारविषयमापेक्षिकं सत्यं—मृगतृष्णिकाद्यनृतापेक्षयोदकादि सत्यमुच्यते । अनृतं च तद्विपरीतम् । किं पुनः ? एतत्सर्वमभवत्, सत्यं परमार्थसत्यम्; किं पुनस्तत् ? ब्रह्म—'सत्यं ज्ञानमनन्तं ब्रह्म' इति प्रकृतत्वात् ।

*एकमेव परमार्थसत्यं ब्रह्म*

यस्मात्सत्त्यदादिकं मूर्तामूर्तधर्मजातं यत्किंचेदं सर्वमविशिष्टं विकारजातमेकमेव सच्छब्दवाच्यं ब्रह्माभवत्—तद्व्यतिरेकेणाभावान्नामरूपविकारस्य, तस्मात्तद्ब्रह्म सत्यमित्याचक्षते ब्रह्मविदः ।

*विद्वदनुभवसिद्धं ब्रह्म*

अस्ति नास्तीत्यनुप्रश्नः प्रकृतः, तस्य प्रतिवचनविषय एतदुक्तम्—आत्मा 'अकामयत बहु स्याम्' इति । स यथाकामं चाऽऽकाशादिकार्यं सत्त्यदादिलक्षणं सृष्ट्वा, तदनुप्रविश्य, पश्यञ्शृण्वन्मन्वानो विजानन्बह्वभवत्; तस्मात्तदेवेदम्—आकाशादिकारणं—कार्यस्थं—'परमे व्योमन्' हृदयगुहायां निहितं—तत्प्रत्ययावभासविशेषेणोपलभ्यमानम्—'अस्ति' इत्येवं विजानीयादित्युक्तं भवति । तदेतस्मिन्नर्थे ब्राह्मणोक्त एषः श्लोको मन्त्रो भवति ।

*प्रकृतप्रकरणस्य फलितम्*

---

यनम्'। अनिरुक्तत्वादमूर्तधर्मश्चेद्, ब्रह्मण एव किं न स्यादित्यत आह—त्यदनिरुक्तानिलयनानीति ।

'तत्सत्यमित्याचक्षते' इत्यस्योपपत्तिमाह—यस्मादिति । पदानि व्याख्याय, प्रकृ-

---

(१) लोकव्यवहारे बाधरहितं शुक्तिरज्जुस्थाण्वादि । (२) व्यवहारदशायामारोपितं रजतसर्पचोरादि । (३) सर्वानात्मकल्पना कूटस्थब्रह्मचैतन्याधीना । शून्यस्य, कल्पितस्य वा कूटस्थानुभवादन्यत्र सत्त्वोपलब्ध्योरसिद्धेः सच्चिदेकतानं कूटस्थं तत्त्वमास्थेयमित्यर्थः ।

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

## अथ सप्तमोऽनुवाकः

असद्वा इदमग्र आसीत् । ततो वै सदजायत । तदा-
त्मान ँ स्वयमकुरुत । तस्मात्तत्सुकृतमुच्यत इति ।

यथा पूर्वेष्वन्नमयाद्यात्मप्रकाशकाः पञ्चस्वपि, एवं सर्वान्तरतमात्मास्तित्वप्रकाशकोऽपि मन्त्रः कार्यद्वारेण भवति ।

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवतः कृतौ तैत्तिरीयोपनिषदि ब्रह्म—आनन्द—वल्लीभाष्ये षष्ठोऽनुवाकः ॥ ६ ॥

---

'असद्वा इदमग्र आसीत्'—असदिति व्याकृतनामरूपविशेषविपरीतरूपम्—अव्याकृतं ब्रह्मोच्यते, न पुनरत्यन्तमेवासत्—न ह्यसतः सज्जन्मास्ति । इदमिति नामरूपविशेषवद्व्याकृतं जगद्; अग्रे–पूर्वं–प्रागुत्पत्तेर्ब्रह्मैवासच्छब्दवाच्यमासीत् । ततोऽसतो वै सत् प्रविभक्तनामरूपविशेषमजायतोत्पन्नम् । किं ततः प्रविभक्तं कार्यमिति—पितुरिव पुत्रः ?

ब्रह्म सुकृतम्
—स्वयं कर्तृ

---

तानुप्रश्ननिराकरणे प्रकरणस्य तात्पर्यं 'सोऽकामयत' इत्यादेर्दर्शयति–अस्ति नास्तीत्यादिना । तस्या बुद्धिगुहायाः प्रत्ययाः—'अहं कर्ता भोक्ता' इत्यादयः, त एवावभासविशेषाः, तैर्व्यज्यमानम्—विशिष्टस्य विषयत्वेऽपि स्वरूपस्याविषयत्वादित्यर्थः ।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दज्ञानविरचिते तैत्तिरीयोपनिषच्छांकरभाष्यटिप्पणे ब्रह्म—आनन्द—वल्ल्यां षष्ठोऽनुवाकः ॥ ६ ॥

---

(१) तुलय–ब्र. सू. १. १. १५; अविकृतं–पाठः । (२) °ष्टधर्मस्य—इति पाठः ।

(३) सृष्ट्वाऽथ जीवरूपेण प्रविवेश वपुष्ययम् ॥ १०३ ॥
यो विज्ञानमयस्तस्मिंश्चैतन्यं प्रतिबिम्बितम् । तच्च धारयति प्राणाञ्जीवाख्यां लभते ततः ॥ १०४ ॥
भोक्ता भूत्वेश्वरस्तद्वद्भोग्यरूपोऽपि सोऽभवत् । भोग्यं च बहुधा सच्च त्यच्चेत्यादिविभेदतः ॥ १०५ ॥
सत् प्रत्यक्षं परोक्षं त्यत् तदभावावुभौ तथा । वक्तुं शक्यमशक्यं चेत्यादि द्वन्द्वेऽस्ति भोग्यता ॥ १०६ ॥
कामित्वमालोचकत्वं स्रष्टृत्वं च प्रवेष्टृता । भोग्याकारश्च पञ्चैते ब्रह्मसद्भावहेतवः ॥ १०७ ॥
सद्रूपः परमात्मा स्यात्कामित्वात्सर्गकामिवत् । आलोचनान्मन्त्रिवत्सन् स्रष्टृत्वाच्च कुलालवत् ॥ १०८ ॥
प्रवेष्टृत्वात्सर्पवत् सन् भोग्यत्वाच्चौदनादिवत् । नानुमानैरेव किन्तु विद्वत्प्रत्यक्षतोऽपि सन् ॥ १०९ ॥
यत्सत्यं ब्रह्म पूर्वोक्तं तदेव जगदात्मना । भाति भ्रान्त्या ततः सर्वं ब्रह्मेत्याचक्षते बुधाः ॥ ११० ॥
सर्पधारादिका भ्रान्त्या कल्पिता तत्त्वदर्शने । रज्जुरेव यथा तद्वद्ब्रह्मैव सकलं जगत् ॥ १११ ॥
नामरूपयुतत्वेन जगत्सद्ब्रह्म नेति यत् । पूर्वपक्षिमतं तत्र ब्रह्मसत्त्वं तदीक्ष्यताम् ॥ ११२ ॥
रज्जुदैर्घ्यं यथा सर्पधारादिष्वनुगच्छति । ब्रह्मसत्त्वं तथा व्योमवाय्वादिष्वनुगच्छति ॥ ११३ ॥

—तैत्तिरीयविद्याप्रकाशः

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

यद्वै तत्सुकृतम् । रसो वै सः । रसꣳ ह्येवायं
लब्ध्वाऽऽनन्दी भवति ।
को ह्येवान्यात्कः प्राण्यात् । यदेष आकाश
आनन्दो न स्यात् । एष ह्येवाऽऽनन्दयाति ।

नेत्याह—तदसच्छब्दवाच्यं स्वयमेवाऽऽत्मानमेवाकुरुत कृतवत् । यस्मादेवं, तस्मात्तद्ब्रह्मैव सुकृतं स्वयं कर्त्रुच्यते । स्वयं कर्तृ ब्रह्मेति प्रसिद्धं लोके—सर्वकारणत्वात् ।

यस्माद्वा स्वयमकरोत्सर्वं सर्वात्मना, तस्मात्पुण्यरूपेणापि तदेव ब्रह्म कारणं सुकृतमुच्यते । सर्वथाऽपि तु फलसंबन्धादिकारणं सुकृतशब्दवाच्यं प्रसिद्धं लोके यदि पुण्यं, यदि वाऽऽन्यत्; सा प्रसिद्धिर्नित्ये चेतनेकारणे सत्युपपद्यते; तस्मादस्ति तद्ब्रह्म—सुकृतप्रसिद्धेरिति ।

ब्रह्म सुकृतं—पुण्यम्

इतश्चास्ति । कुतः ? रसत्वात् । कुतो रसत्वप्रसिद्धिर्ब्रह्मणः ? इत्यत आह—

'यद्वै तत्सुकृतम् । रसो वै सः ।' रसो नाम तृप्तिहेतुरानन्दकरो मधुराम्लादिः प्रसिद्धो लोके । रसमेव ह्ययं लब्ध्वा प्राप्याऽऽनन्दी सुखी भवति । नासत आनन्दहेतुत्वं दृष्टं लोके । बाह्यानन्दसाधनरहिता अप्यनीहा निरेषणा ब्राह्मणा बाह्यरसलाभादिव सानन्दा दृश्यन्ते विद्वांसः; नूनं ब्रह्मैव रसस्तेषाम् । तस्मादस्ति तत्तेषामानन्दकारणं रसवद्ब्रह्म ।

ब्रह्मैवातीन्द्रियरसः

---

सुकृतमिति । क्तप्रत्ययः सुष्ठु क्रियत इति कर्माभिधायकोऽपि च्छान्दस्या प्रक्रियया सुष्ठु करोतीति कर्तरि व्याख्यातः ।

---

(१) चेतनवत्का°—पाठः ।

(२) असदेवेदमग्रेऽभून्नामरूपात्मकं जगत् । पश्चात्तु ब्रह्मणा सृष्टं सदभूद्ब्रह्मसत्त्वतः ॥ ११४ ॥
तद्ब्रह्मात्मानमेवेमं सच्चिदानन्दलक्षणम् । अकार्षीज्जगदाकारं स्वयमेव स्वमायया ॥ ११५ ॥
अस्ति भाति प्रियं चेति प्रतिवस्त्ववभासते । त एते सच्चिदानन्दा ब्रह्मगा भान्ति वस्तुषु ॥ ११६ ॥
नामरूपे घटादीनां प्रागभावयुते ततः । अभावत्वं च भावत्वं पर्यायेणेक्ष्यते तयोः ॥ ११७ ॥
आगमापायिधर्मौ यौ न तयोर्धर्मिरूपता । शयनोत्थानयोर्नास्ति देहवस्तुस्वरूपता ॥ ११८ ॥
सत्त्वासत्त्वे अन्यदीये भासेते नामरूपयोः । मायारूपमसत्त्वं स्यात् सत्ताया ब्रह्मरूपता ॥ ११९ ॥
जाड्यदुःखे मायिके स्तो भानानन्दौ परात्मगौ । लौकिकाः सच्चिदानन्दा ब्रह्मगाश्चेदसत्कथम् ॥१२०॥
—तैत्तिरीयकविद्याप्रकाशः



CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनि-
रुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते ।
अथ सोऽभयं गतो भवति ।

इतश्चास्ति । कुतः ? प्राणनादिक्रियादर्शनात् । अयमपि हि पिण्डो जीवतः प्राणेन प्राणित्यपानेनापानिति; एवं वायवीया ऐन्द्रियकाश्च चेष्टाः संहतैः कार्यकरणैर्निर्वर्त्यमाना दृश्यन्ते । तच्चैकार्थवृत्तित्वेन संहननं नान्तरेण चेतनमसंहतं संभवति—अन्यत्रादर्शनात् । तदाह—यद्यदि एष आकाशे 'परमे व्योम्नि गुहायां निहितः' आनन्दो न स्यान्न भवेत्, को ह्येव लोकेऽऽन्यादपानचेष्टां कुर्यादित्यर्थः । कः प्राण्यात्प्राणनं वा कुर्यात्; तस्मादस्ति तद्ब्रह्म, यदर्थाः कार्यकरणप्राणनादिचेष्टाः; तत्कृत एव चाऽऽनन्दो लोकस्य । कुतः ? एष ह्येव पर आत्माऽऽनन्दयात्यानन्दयति सुखयति लोकं धर्मानुरूपम् । स एवाऽऽत्माऽऽनन्दरूपोऽविद्यया परिच्छिन्नो विभाव्यते प्राणिभिरित्यर्थः ।

*ब्रह्म देहादिचेष्टा-वैषयिकानन्दहेतुः*

भयाभयहेतुत्वाद्विद्वदविदुषोरस्ति तद्ब्रह्म । सद्वस्त्वाश्रयणेन ह्यभयं भवति; नासद्वस्त्वाश्रयणेन भयनिवृत्तिरुपपद्यते ।

कथमभयहेतुत्वमिति ? उच्यते—

यदा ह्येव यस्मादेष साधक एतस्मिन्ब्रह्मणि—किंविशिष्टे ? अदृश्ये—दृश्यं नाम द्रष्टव्यं—विकारः—दर्शनार्थत्वाद्विकारस्य; न दृश्यमदृश्यमविकार इत्यर्थः । एतस्मिन्नदृश्येऽविकारेऽविषयभूते, अनात्म्येऽशरीरे—यस्माददृश्यं तस्मादनात्म्यं; यस्मादनात्म्यं तस्मादनिरुक्तम्—विशेषो हि निरुच्यते, विशेषश्च विकारः, अविकारं च ब्रह्म—सर्वविकारहेतुत्वात्, तस्मादनिरुक्तम् । यत एवं, तस्मादनिलयनं, निलयनं—नीडः—

*विदुष एव ब्रह्मप्राप्तिः*

---

एकार्थवृत्तित्वेनेति । एकप्रयोजनसाधनत्वेन परस्परायत्ततेत्यर्थः । अन्यत्रेति—गृहप्रासादिषु स्वतन्त्रं गृहाद्यनारभ्यं स्वामिनमन्तरेण संहननस्यादर्शनात्, कार्यकरणसंघातेऽपि विलक्षणः स्वामी शरीरोपचयादिरहितोऽवगम्यते । स च चेतनत्वेन भेदाभावाद्ब्रह्मैव—इति तदस्तित्वसिद्धिरित्यर्थः ।

---

( १ ) सप्तम्यन्तः प्रथमान्तो वा । प्रथमान्तपक्षे आकाशपदमानन्दपदसमानाधिकरणम्, ततश्चाकाशाभिधानः परमानन्दः परमात्मस्वभाव इत्यर्थः । तुलय—ब्र. सू. भा. १. १. २२. ( २ ) अभीष्टविषयलाभे सति मनो विषयाभिमुख्यं परित्यज्य विषयान्तराभिलाषोदयात् पूर्वमन्तर्मुखं प्रत्यगात्मानन्दमनुभवति । सोऽयं लोके विषयानन्द इत्युच्यते ।

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते ।
अथ तस्य भयं भवति ।
तत्त्वेव भयं विदुषोऽमन्वानस्य ।
तदप्येष श्लोको भवति ।

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि ब्रह्म—आनन्द—वल्ल्यां सप्तमोऽनुवाकः ॥ ७ ॥

---

आश्रयः, न निलयनम्—अनिलयनम्—अनाधारं, तस्मिन्नेतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयने सर्वकार्यधर्मविलक्षणे ब्रह्मणीति वाक्यार्थः । अभयमिति क्रियाविशेषणम् । अभयामिति वा लिङ्गान्तरं परिणस्यते । प्रतिष्ठां स्थितिमात्मभावं विन्दते लभते । अथ तदा स तस्मिन्नानात्वस्य भयहेतोरविद्याकृतस्यादर्शनादभयं गतो भवति । स्वरूपप्रतिष्ठो ह्यसौ यदा भवति, तदा नान्यत्पश्यति, नान्यच्छृणोति, नान्यद्विजानाति । अन्यस्य ह्यन्यतो भयं भवति, नाऽऽत्मन एवाऽऽत्मनो भयं युक्तम्; तस्मादात्मैवाऽऽत्मनोऽभयकारणम् । सर्वतो हि निर्भया ब्राह्मणा दृश्यन्ते, सत्सु भयहेतुषु; तच्चायुक्तमसति भयत्राणे ब्रह्मणि । तस्मात्तेषामभयदर्शनादस्ति तदभयकारणं ब्रह्मेति । कदाऽसावभयं गतो भवति साधकः ? यदा नान्यत्पश्यति, आत्मनि चान्तरं—भेदं न कुरुते, तदाऽभयं गतो भवतीत्यभिप्रायः ।

भेददर्शनस्य भयकारणत्वम्

यदा पुनरविद्यावस्थायां हि यस्मादेषोऽविद्यावानविद्यया प्रत्युपस्थापितं वस्तु तैमिरिकाद्वितीयचन्द्रवत्पश्यति; आत्मनि चैतस्मिन् ब्रह्मणि उदपि, अरमल्पमप्यन्तरं छिद्रं भेददर्शनं कुरुते—भेददर्शनमेव हि भयकारणम्—अल्पमपि भेदं पश्यतीत्यर्थः । अथ तस्माद्भेददर्शनाद्धेतोस्तस्य भेददर्शिन आत्मनो भयं भवति । तस्मादात्मैवाऽऽत्मनो भयकारणमविदुषः ।

भेददर्शिनो विदुषो ब्रह्म भयम्

तदेतदाह—(१) तद्ब्रह्म तु एव भयं भेददर्शिनो विदुष ईश्वरोऽन्यो मत्तः, अहमन्यः संसारीत्येवंविदुषः; (२) भेददृष्टमीश्वराख्यं तदेव ब्रह्माल्पमप्यन्तरं कुर्वतो भयं भवत्येकत्वेनामन्वानस्य । तस्मा-

---

(१) ह्यन्तरकरण°—पाठः (२) आत्मैकत्वेन ब्रह्मामन्वानस्य, विद्यान्तरयुक्तस्यापि ब्रह्मतत्त्वज्ञानरहितस्य । विदुषो मन्वानस्य, विदुषोऽमन्वानस्येति वा पदयोजना । प्रथमपक्षे विदुषः प्रत्यगात्मनः सकाशादीषन्मात्रेणापि भिन्नं ब्रह्मेति पश्यतः संमोहवशवर्तिनो मोहादात्मैव भयं भवतीत्यर्थः ।

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

## अथ अष्टमोऽनुवाकः

भीषाऽस्माद्वातः पवते । भीषोदेति सूर्यः ।
भीषाऽस्मादग्निश्चेन्द्रश्च । मृत्युर्धावति पञ्चम इति ॥

द्विद्वानप्यविद्वानेवासौ, योऽयमेकमभिन्नमात्मतत्त्वं न पश्यति । उच्छेदहेतुदर्शनाद्ध्युच्छेद्याभिमतस्य भयं भवति; अनुच्छेद्यो ह्युच्छेदहेतुः; तत्रासत्युच्छेदहेतावुच्छेद्ये न तद्दर्शनकार्यं भयं युक्तम् । सर्वं च जगद्भयवद्दृश्यते । तस्माज्जगतो भयदर्शनाद्गम्यते—नूनं तदस्ति भयकारणमुच्छेदहेतुरनुच्छेद्यात्मकं, यतो जगद्बिभेतीति । तदेतस्मिन्नप्यर्थ एष श्लोको भवति ।

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवतः कृतौ तैत्तिरीयोपनिषदि ब्रह्म—आनन्द—वल्लीभाष्ये सप्तमोऽनुवाकः ॥ ७ ॥

---

भीषा भयेन अस्माद्वातः पवते । भीषोदेति सूर्यः । भीषाऽस्मादग्निश्चे-

'दासोऽहं तस्य देवस्य, ममाऽऽराध्यः परमेश्वरः'—इति भेदं विद्वान्कथमज्ञ उच्यते ? तत्राऽऽह—असौ योऽयमिति । यथा चन्द्रभेदं पश्यन्नप्यविद्वानुच्यते—अतत्त्वदर्शित्वात्—तथेत्यर्थः । कथं तर्हि तस्य भयसंभावनेत्यत आह—उच्छेदेति । संहर्ता हि परमेश्वरो मां संहरिष्यति, नरके वा निक्षेप्स्यतीति पश्यतो भयं भवतीत्यर्थः । ब्रह्मैवोच्छेदहेतुः कुत इत्यत आह—अनुच्छेद्यो हीति । उच्छेदहेतोरप्युच्छेद्यत्वेऽनवस्थाप्रसङ्गान्नित्यत्वं वक्तव्यं, तच्च ब्रह्मणः, नान्यस्य संभाव्यत इत्यर्थः ।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दशिष्यानन्दज्ञानविरचिते तैत्तिरीयोपनिषच्छांकरभाष्यटिप्पणे ब्रह्म—आनन्द—वल्ल्यां सप्तमोऽनुवाकः ॥ ७ ॥

---

( १ ) °तावनुच्छेद्ये त°—इति पाठः । ( २ ) ?

भवेत्तु ब्रह्मसत्ताऽस्मिन्नानन्दोऽस्ति कथं शृणु । आनन्दोऽत्राभ्युपेतव्यो रसवान्मधुरादिवत् ॥ १२१ ॥
मूढस्य मधुरादिः स्याद्रसो ब्रह्म विवेकिनः । मधुरादिभुगानन्दी ब्रह्मविच्च तथा सुखी ॥ १२२ ॥
ब्रह्मानन्दो न चेदत्र देहं को नाम चेष्टयेत् । प्राणाक्षाणां चेष्टकत्वं न तत्र करणत्वतः ॥ १२३ ॥
न केवलं चेष्टकत्वं विषयानन्दहेतुता । अप्यल्पविषयान् लब्ध्वा स्वानन्दे मज्जति क्षणम् ॥ १२४ ॥
विषयानन्दपर्यन्तैः कामसृष्ट्यादिहेतुभिः । ब्रह्मसत्त्वे स्थिते मुक्तिश्चिन्त्यते विद्वदज्ञयोः ॥ १२५ ॥
विद्वान् ब्रह्मेति मुक्तश्चेन्मुच्येताज्ञोऽप्यभिज्ञवत् । ब्रह्मरूपोऽपि बद्धश्चेदज्ञोऽभिज्ञोऽपि बध्यते ॥ १२६ ॥
मैवं ब्रह्मात्मैक्यबोध एवैको मोक्षकारणम् । ऐक्यदर्शी मुच्यतेऽतो भेददर्शी न मुच्यते ॥ १२७ ॥
ऊर्ध्वाकारे समेऽप्यस्मिंश्चोरदर्शी बिभेति हि । स्थाणुदर्शी निर्भयोऽतस्तत्त्वबोधः प्रयोजकः ॥ १२८ ॥

—तैत्तिरीयकविद्याप्रकाशः

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

## सैषाऽऽनन्दस्य मीमाꣳसा भवति ।

न्द्रश्च । मृत्युर्धावति पञ्चम इति । वातादयो हि महार्हाः स्वयमीश्वराः सन्तः पवनादिकार्येष्वायासबहुलेषु नियताः प्रवर्तन्ते । तद्युक्तं प्रशास्तरि सत्यन्यस्मिन्नियमेन तेषां प्रवर्तनम्; तस्मादस्ति भयकारणं तेषां प्रशास्तृ ब्रह्म, यतस्ते भृत्या इव राज्ञोऽस्माद्ब्रह्मणो भयेन प्रवर्तन्ते; तच्च भयकारणमानन्दं ब्रह्म ॥

तस्यास्य ब्रह्मण आनन्दस्यैषा मीमांसा विचारणा भवति । किमानन्दस्य मीमांस्यमिति? उच्यते—किमानन्दो विषयविषयिसंबन्धजनितो लौकिकानन्दवत्, आहोस्वित्स्वाभाविकः?—इत्येवमेषाऽऽनन्दस्य मीमांसा ।

ब्रह्मानन्दो जन्यः स्वाभविको वा ?

तत्र लौकिक आनन्दो बाह्याध्यात्मिकसाधनसंपत्तिनिमित्त उत्कृष्टः । स य एष निर्दिश्यते ब्रह्मानन्दानुगमार्थम् । अनेन हि प्रसिद्धेनाऽऽनन्देन व्यावृत्तविषयबुद्धिगम्य आनन्दोऽनुगन्तुं शक्यते । लौकिकोऽप्यानन्दो ब्रह्मानन्दस्यैव मात्रा—अविद्यया तिरस्क्रियमाणे विज्ञाने, उत्कृष्यमाणायां चाविद्यायां, ब्रह्मादिभिः कर्मवशाद्यथाविज्ञानं विषयादिसाधनसंबन्धवशाच्च विभाव्यमानश्च लोकेऽनवस्थितो लौकिकः संपद्यते; स एवाविद्याकामकर्मापकर्षेण मनुष्यगन्धर्वाद्युत्तरोत्तरभूमिष्वकामहतविद्वच्छ्रोत्रियप्रत्यक्षो विभाव्यते—शतगुणोत्तरोत्तरोत्कर्षेण यावद्धिरण्यगर्भस्य ब्रह्मण आनन्द इति ।

विषयानन्दद्वारा ब्रह्मानन्दानुगमः

---

तच्च भयकारणं ब्रह्मानन्दरूपमुक्तं "यदेष आकाश आनन्दो न स्यात्"—इति, अत्राऽऽनन्दश्च लोके जन्यः प्रसिद्धः, ततो विचारमारभते—तस्यास्येत्यादिना ।

ब्रह्मानन्दस्य चेन्मीमांसा प्रस्तुता, किमर्थस्तर्हि सार्वभौमानन्दाद्युपन्यासः? तत्राऽऽह—तत्र लौकिक इत्यादिना । लौकिक आनन्दः क्वचित्काष्ठां प्राप्तः, सातिशयत्वात्, परि-

---

(१) समाप्तायुषां निकटे धावतीत्यर्थः ।

(२) ज्ञातेऽपि कर्मकाण्डार्थे वेदान्तार्थमजानतः । जन्मादिभीर्भवत्येव वाय्वादीनां यथा तथा ॥ १२९ ॥
वायुः सूर्यो वह्निरिन्द्रो मृत्युश्चातीतजन्मनि । धर्मज्ञा अप्यतरवशा इदानीं बिभ्यतीश्वरात् ॥ १३० ॥
—तैत्तिरीयकविद्याप्रकाशः

(३) 'युवा स्यात्साधुयुवा' इत्यादिना वक्ष्यमाणा सार्वभौमं मनुष्ययुवानन्दमारभ्य ब्रह्मानन्दावसाना एषा संनिहिता आनन्दस्य तारतम्यमीमांसा 'सैषा' इत्युक्ता । (४) तै. उ. २. ७.

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

मानुषानन्दः युवा स्यात्साधुयुवाऽध्यायकः । आशिष्ठो दृढिष्ठो बलिष्ठः । तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात् । स एको मानुष आनन्दः ।

मनुष्यगन्धर्वानन्दः ते ये शतं मानुषा आनन्दाः ( १ )स एको मनुष्यगन्धर्वाणामानन्दः । श्रोत्रियस्य चाकामहतस्य ।

निरस्ते त्वविद्याकृते विषयविषयिविभागे, विद्यया स्वाभाविकः परिपूर्ण एक आनन्दोऽद्वैतो भवतीत्येतमर्थं विभावयिष्यान्नाह—

युवा प्रथमवयाः । साधुयुवेति साधुश्चासौ युवा चेति यूनो विशेषणम्— मानुषानन्दः युवाऽप्यसाधुर्भवति, साधुरप्ययुवा, अतो विशेषणम्—'युवा स्यात्साधुयुवा ' इति; अध्यायकोऽधीतवेदः; आशिष्ठ आशास्तृतमः; दृढिष्ठो दृढतमः; बलिष्ठो बलवत्तमः; एवमाध्यात्मिकसाधनसंपन्नः । तस्येयं पृथिव्युर्वी सर्वा वित्तस्य—वित्तेन, उपभोगसाधनेन दृष्टार्थेनादृष्टार्थेन च कर्मसाधनेन-संपन्ना पूर्णा,—राजा पृथिवीपतिरित्यर्थः । तस्य च य आनन्दः, स एको मानुषो मनुष्याणां प्रकृष्ट एक आनन्दः ।

ते ये शतं मानुषा आनन्दाः, स एको मनुष्यगन्धर्वाणामानन्दः—मानुषा-मनुष्यगन्धर्वानन्दः नन्दाच्छतगुणेनोत्कृष्टो मनुष्यगन्धर्वाणामानन्दो भवति । मनुष्याः सन्तः कर्मविद्याविशेषाद्गन्धर्वत्वं प्राप्ताः 'मनुष्यगन्धर्वाः' । ते ह्यन्तर्धा-तस्योत्कृष्टत्वे नादिशक्तिसंपन्नाः सूक्ष्मकार्यकरणाः; तस्मात्प्रतिघाताल्पत्वं निमित्तम् तेषां, द्वंद्वप्रतिघातशक्तिसाधनसंपत्तिश्च, ततोऽप्रतिहन्यमानस्य प्रतीकारवतो मनुष्यगन्धर्वस्य स्याच्चित्तप्रसादः; तत्प्रसादविशेषात्सुखविशेषाभिव्यक्तिः । एवं पूर्वस्याः पूर्वस्या भूमेरुत्तरस्यामुत्तरस्यां भूमौ प्रसाद-

---

माणवत्—इति ब्रह्मानन्दानुगमार्थो लौकिकोपन्यास इत्यर्थः । विषयेभ्यो व्यावृत्ता व्यावृत्तविषया अविषयब्रह्मात्मैकत्वदर्शिनस्तद्बुद्धिगोचर इत्यर्थः । प्रकारान्तरेण ब्रह्मानन्दानुगममाह—लौकिकोऽपीत्यादिना ।

मनुष्यगन्धर्वानन्दस्योत्कृष्टत्वे निमित्तमाह—ते ह्यन्तर्धानादीति । प्रथममकामहताग्रहणस्य तात्पर्यमाह—प्रथममिति । यदि प्रथमपर्याय एवाकामहतो गृह्येत, तदा तस्यैव सार्वभौमानन्देन तुल्य आनन्दः स्यात्, तदा च व्याघातो भवेत्—मानुषानन्दे निस्पृहो मानुषा-

---

(१) आशुतमः—पाठः । (२) °तमः क्षिप्रकारिषु मध्ये स्वयमतिशयत्वादित्यर्थः । दृ°—पाठः । (३) द्वंद्वानां प्रतिघाते प्रतिक्षेपे शक्तिश्च साधनानि च तेषां संपत्तिः सामग्रीति यावत् । (४) अनुमानार्थः—पाठः ।

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

देवगन्धर्वानन्दः

ते ये शतं मनुष्यगन्धर्वाणामानन्दाः । स एको देवगन्धर्वाणामानन्दः । श्रोत्रियस्य चाकामहतस्य ।

चिरलोकलोकपित्रानन्दः

ते ये शतं देवगन्धर्वाणामानन्दाः । स एकः पितॄणां चिरलोकलोकानामानन्दः । श्रोत्रियस्य चाकामहतस्य ।

आजानजदेवानन्दः

ते ये शतं पितॄणां चिरलोकलोकानामानन्दाः । स एक आजानजानां देवानामानन्दः ( २ ) । श्रोत्रियस्य चाकामहतस्य ।

कर्मदेवानन्दः

ते ये शतमाजानजानां देवानामानन्दाः । स एकः कर्मदेवानां देवानामानन्दः । ये कर्मणा देवानपियन्ति । श्रोत्रियस्य चाकामहतस्य ।

विशेषतः शतगुणेनाऽऽनन्दोत्कर्ष उपपद्यते । प्रथमं त्वकामहताग्रहणं—मनुष्यविषयभोगकामानभिहतस्य श्रोत्रियस्य मनुष्यानन्दाच्छतगुणेनाऽऽनन्दोत्कर्षो मनुष्यगन्धर्वेण तुल्यो वक्तव्यः—इत्येवमर्थम् । 'साधुयुवाऽध्यायकः' इति श्रोत्रियत्वावृजिनत्वे गृह्येते । ते ह्यविशिष्टे सर्वत्र; अकामहतत्वं तु विषयोत्कर्षापकर्षतः सुखोत्कर्षापकर्षाय विशेष्यते । अतः 'अकामहतग्रहणम्'—तद्विशेषतः शतगुणसुखोत्कर्षोपलब्धेः—अकामहतत्वस्य परमानन्दप्राप्तिसाधनत्वविधानार्थम् । व्याख्यातमन्यत् ।

आनन्दप्राप्तिसाधनत्रयम्

देवगन्धर्वा जातित एव । चिरलोकलोकानामिति पितॄणां विशेषणम्—चिरकालस्थायी लोको येषां पितॄणां ते चिरलोकलोका इति । 'आजानः' इति देवलोकः, तस्मिन्नाजाने जाताः "आजानजाः' देवाः स्मार्तकर्मविशेषतो देवस्थानेषु जाताः ।

कर्मदेवा ये वैदिकेन कर्मणाऽग्निहोत्रादिना केवलेन देवानपियन्ति । 'देवाः'

---

नन्दभोगभागी चेति—ततो मनुष्यगन्धर्वानन्देन तुल्यमानन्दं तस्य दर्शयितुं प्रथमपर्याये तद्ग्रहणमित्यर्थः । 'अवृजिनत्वम्' अपापत्वं—यथोक्तकारित्वं—तत्साधुपदाल्लभ्यत इत्यर्थः ।

---

(१) तुल्य—बृ. उ. ४. ३. ३३. (२) ॰र्षतया विशिष्यते—पाठः। (३) वापीकूपतटाकादि। (४) समुच्चय—( कर्मोपासना— ) कारिणो देवयानमार्गगामिनः ।

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

देवानन्दः

ते ये शतं कर्मदेवानां देवानामानन्दाः । स एको देवानामानन्दः । श्रोत्रियस्य चाकामहतस्य ।

इन्द्रानन्दः

ते ये शतं देवानामानन्दाः । स एक इन्द्रस्याऽऽनन्दः ( ३ ) । श्रोत्रियस्य चाकामहतस्य ।

बृहस्पत्यानन्दः

ते ये शतमिन्द्रस्याऽऽनन्दाः । स एको बृहस्पतेरानन्दः । श्रोत्रियस्य चाकामहतस्य ।

प्रजापत्यानन्दः

ते ये शतं बृहस्पतेरानन्दाः । स एकः प्रजापतेरानन्दः । श्रोत्रियस्य चाकामहतस्य ।

हिरण्यगर्भानन्दः

ते ये शतं प्रजापतेरानन्दाः । स एको ब्रह्मण आनन्दः । श्रोत्रियस्य चाकामहतस्य ( ४ ) ।

इति त्रयस्त्रिंशद्धविर्भुजः । 'इन्द्रः' तेषां स्वामी । तस्याऽऽचार्यो 'बृहस्पतिः' । 'प्रजापतिः' विराट् । त्रैलोक्यशरीरो ब्रह्मा समष्टिव्यष्टिरूपः संसारमण्डलव्यापी । यत्रैत आनन्दभेदा एकतां गच्छन्ति, धर्मश्च तन्निमित्तो ज्ञानं च तद्विषयमकामहतत्वं च निरतिशयं यत्र, स एष हिरण्यगर्भो ब्रह्मा; तस्यैष आनन्दः श्रोत्रियेणावृजिनेनाकामहतेन च सर्वतः प्रत्यक्षमुपलभ्यते । तस्मादेतानि त्रीणि साधनानीत्यवगम्यते; तत्र श्रोत्रियत्वावृजिनत्वे नियते, अकामहतत्वं तूत्कृष्यत इति प्रकृष्टसाधनताऽवगम्यते ।

अकामहतत्वं प्रकृष्टसाधनम्

तस्याकामहतत्वप्रकर्षतश्चोपलभ्यमानः श्रोत्रियप्रत्यक्षो ब्रह्मण आनन्दो यस्य परमानन्दस्य मात्रा—एकदेशः "एतस्यैवाऽऽनन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" इति श्रुत्यन्तरात्—स एष आन-

सातिशयनिरतिशयानन्दयोरुपायोपेयभावः

---

त्रयस्त्रिंशत् । अष्टौ वसवः, एकादश रुद्राः, द्वादशाऽऽदित्याः, इन्द्रः, प्रजापतिश्चेति । यदर्थं मीमांसाऽऽरब्धा, तस्य निरतिशयानन्दस्य सिद्धौ वाक्यतात्पर्यं दर्शयितुमाह—तस्याकामहतत्वेति । तस्य ब्रह्मणो हिरण्यमयस्याऽऽनन्दस्तदुपासकप्रत्यक्षो यस्य मात्रा, स एष

---

(१) बृ. उ. ४. ३. ३२. । (२) तै. आ. १. ९. १. (३) तै. आ. १. ९. ४. (४) बृ. उ. ३. ९. ५; निघ. ५. ६; महा. भा. आदिप. २५. २३. ( ५ ) ऐ. ब्रा. २. ८. ८; शत. ब्रा. ४. ५. ७. २; ११. ६. ३. ५; वा. रामा. ३. २०. १५.

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

तैत्तिरीयशाखोपनिषन्-महावाक्यम् **स यश्चायं पुरुषे । यश्चा-सावादित्ये । स एकः ।**

न्दो यस्य मात्रा समुद्राम्भस इव विप्रुषः प्रविभक्ता यत्रैकतां गता—स एष परमानन्दः स्वाभाविकः; अद्वैतत्वादानन्दानन्दिनोश्चाविभागोऽत्र ।

तदेतन्मीमांसाफलमुपसंह्रियते—

स यश्चायं पुरुष इति । यो गुहायां निहितः परमे व्योम्न्याकाशादिकार्यं सृष्ट्वाऽन्नमयान्तं, तदेवानुप्रविष्टः 'स यः' इति निर्दिश्यते; कोऽसौ ? 'अयं पुरुषे; यश्चासावादित्ये'—यः परमानन्दः श्रोत्रियप्रत्यक्षो निर्दिष्टः, यस्यैकदेशं ब्रह्मादीनि भूतानि सुखार्हाण्युपजीवन्ति, 'स यश्चासावादित्ये' इति निर्दिश्यते; स एको भिन्नप्रदेशस्थघटाकाशाकाशैकत्ववत् ।

जीवस्य निरतिशयानन्दब्रह्मैकत्वम्

---

परमानन्दः स्वाभाविक इति संबन्धः । हिरण्यगर्भानन्दस्य मात्रात्वे श्रुत्यन्तरं प्रमाणयति—एतस्यैवेति । न केवलं हिरण्यगर्भानन्द एव मात्रा; यश्च प्रागुपन्यस्तः सार्वभौमाद्यानन्दः 'स एष यस्य मात्रा प्रविभक्ता' नानात्वमापन्ना सती 'यत्र' निरतिशयानन्देऽकामहतब्रह्मवित्प्रत्यक्षे कैवल्ये 'एकतां गता' इति योजना । अकामहतप्रत्यक्षत्वाभिधानाद्भेदप्राप्तिं निरस्यति—आनन्दानन्दिनोश्चेति । प्रत्यक्षत्वाभिधानमज्ञानसंशयादिव्यवधानाभावाभिप्रायं,

---

(१) "ब्रह्मानन्दयोः सामानाधिकरण्यं न "नीलोत्पलवद्गुणगुणिभावविवक्षया । "केवलो निर्गुणश्च" (श्वे. उ. ६. ११.) इति श्रुतेः । गुणस्य गुणिना भेदाभेदयोरनिरूपणादुपपन्नं निर्गुणत्वम् । अत्र भेदाभेदवादी 'न निर्गुणं द्रव्यमस्ति' इति जल्पति । मा भून्निर्गुणं द्रव्यम्; ब्रह्म तु न द्रव्यम्, प्रमाणाभावात् । समवायिकारणाद्द्रव्यमिति चेत्, न; गुणादीनामपि स्वगतज्ञेयत्ववाच्यत्वादिधर्मोपादानत्वात् । गुणो नाम धर्मः । तथा च न निर्धर्मकः पदार्थोऽस्तीति चेत्, न; कस्यचिद्धर्मस्यैव निर्धर्मकताया अङ्गीकार्यत्वात्; अन्यथाऽनवस्थापत्तेः । तस्मात् 'न निर्गुणं ब्रह्म' इति वचनं दर्शनप्रद्वेषमात्रम्" । वि. प्र. सं. पृ. २१७. (२) अत्र—ब्रह्मणि । (३) सैषाऽऽनन्दस्येत्यादौ सातिशयानन्दद्वारा निरतिशयानन्दमनुमाय यद्ब्रह्म निरतिशयानन्दात्मकं निर्धारितं, तदत्रात्मत्वेन संक्षिप्य प्रतिपाद्यते; किंच यो हि परमात्मा सत्यज्ञानादिवाक्येन सत्यादिलक्षणो दर्शितः, स एव 'यो वेद निहितं गुहायां' इति बुद्धौ चात्मनि बुद्धिस्वरूपे प्रविष्टो निर्दिष्टः, स एव चात्र "स यश्चायं" इत्यादावुपसंह्रियते, ब्रह्मात्मनोरेकत्वज्ञानदृढीकरणार्थम् । (४) "सत्यं ज्ञानमनन्तं ब्रह्म" (२. १) इत्यवान्तरवाक्येन अद्वितीयं ब्रह्म उक्त्वा "स यश्चायं पुरुषे । यश्चासावादित्ये । स एकः ।" इत्यनेन **महावाक्येन** प्रतीचोऽद्वितीयब्रह्मत्वं बोधयति । ननु कथं ब्रह्मणोऽद्वितीयत्वमाकाशादेः द्वितीयस्य विद्यमानत्वात् ? कथं वा प्रतीचो ब्रह्मत्वं तयोर्भेदस्यैवानुभवात् ?—इत्याशङ्कायां "तस्माद्वा एतस्मादात्मन आकाशः संभूतः ।" (२. १), "सोऽकामयत ।" (२. ६) इत्याद्याः सृष्ट्याद्यर्थवादरूपाः श्रुतय आकाशादेः सर्वस्य जगतो ब्रह्मणः

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

ननु तन्निर्देशो ' स यश्चायं पुरुषे ' इत्यविशेषतोऽध्यात्मं न युक्तो निर्देशः, ' यश्चायं दक्षिणेऽक्षन् ' इति तु युक्तः, प्रसिद्धत्वात् । न, पराधिकारात्—परो ह्यात्माऽत्राधिकृतः ' अदृश्येऽनात्म्ये...भीषाऽस्माद्वातः पवते...सैषाऽऽनन्दस्य मीमांसा ' इति, न ह्येकस्मादप्रकृतो युक्तो निर्देष्टुम्, परमात्मविज्ञानं च विवक्षितम्, तस्मात्पर एव निर्दिश्यते ' स एकः ' इति; ननु ' आनन्दस्य मीमांसा ' प्रकृता, तस्या अपि फलमुपसंहर्तव्यम्—अभिन्नः स्वाभाविक आनन्दः परमात्मैव, न विषयविषयिसंबन्धजनित इति; ननु तदनुरूप एवायं निर्देशः ' स यश्चायं पुरुषे यश्चासावादित्ये स एकः ' इति भिन्नाधिकरणस्थविशेषोपमर्देन । नन्वेवमपि 'आदित्य' विशेषग्रहणमनर्थकम् । नानर्थकम्—उत्कर्षापकर्षापोहार्थत्वात्—द्वैतस्य हि मूर्तामूर्तलक्षणस्य पर उत्कर्षः सवित्रभ्यन्तर्गतः, स

---

न तु विषयविषयिभावाभिप्रायम्,—'अदृश्येऽनात्म्य उदरमन्तरं कुरुते' इत्यादिना निषेधादित्यर्थः ।

मीमांसया निरतिशयानन्दं ब्रह्मास्तीति निर्धारितम् । तस्याकामहतप्रत्यक्षत्वाभिधानादभेदसिद्धिः—न हि परानन्दः परस्य प्रत्यक्षो भवति, तस्मान्निरतिशयानन्दब्रह्मैकत्वं जीवस्य 'ब्रह्मविदाप्नोति परम्' इत्युपक्रान्तं, मीमांसया च सिद्धमुपसंह्रियत इत्यर्थः । 'आदित्य' ग्रहणस्याऽऽधिदैविकोपाधिलक्षणार्थस्याविवक्षितत्वं दर्शयितुं चोद्यमुद्भावयति—नन्विति । "य एष एतस्मिन्मण्डले पुरुषः" "योऽयं दक्षिणेऽक्षन्पुरुषः" इत्यादौ श्रुत्यन्तरे मण्डलस्थस्य दक्षिणाक्षिस्थेनैक्यस्य प्रसिद्धत्वात्, इहाप्यादित्यस्थेनैक्यनिर्देशे दक्षिणाक्षिग्रहणं युक्तमित्यर्थः । अध्यात्ममाधिदैवतं च लिङ्गात्मोपासनविवक्षायां तथा स्यात्, नेह तद्विवक्षितमित्याह—न परेति । य एव चिद्धातुर्निरतिशयानन्द उत्कृष्टोपाधौ प्रतिबिम्बितः, स एव निकृष्टोपाधौ

---

पन्नोत्पत्तेः, तस्मिन्नेव अवस्थानात्, पुनस्तत्रैव लयात्, मृदुत्पत्तिस्थितिलयकस्य घटादेः मृदभेदवत् कारणब्रह्ममात्रतया अवान्तरवाक्योक्तं ब्रह्मणोऽद्वितीयत्वं संभावयामासुः । " तत्सृष्ट्वा । तदेवानुप्राविशत् " ( २. ६. ) इत्याद्याः श्रुतयः ब्रह्मण एव जीवरूपेण प्रवेशं ब्रुवन्त्यः, न तु बहिः स्थित्वाऽन्तर्गृहे प्रविष्टदेवदत्तवत्, जीवब्रह्मणोः अभेदं महावाक्यप्रतिपाद्यं संभावयामासुः । तथा नियमनश्रुतिश्च " भीषाऽस्माद्वातः पवते " ( २. ८. ) इत्याद्या अत्यन्तभेदे नियाम्यनियामकभावानुपपत्तेः, तयोरभेदमेव संभावयति । तथा " स वा एष पुरुषोऽन्नरसमयः " ( २. १. ) इत्याद्याः तत्त्वंपदार्थपरिशोधनरूपाः श्रुतयः जीवेश्वरोभयगतविरुद्धधर्मनिरासद्वारा तयोरैक्यमेव संभावयन्ति । तथा " ब्रह्मविदाप्नोति परम् " ( २. १. ) इत्याद्याश्च अभेदज्ञानस्य निरतिशयफलप्रदर्शनेन अभेदस्य विवक्षितत्वं ज्ञापयन्त्यस्तमेव संभावयन्ति । इत्थं सृष्टिस्थितिप्रलयप्रवेशनियमनतत्त्वंपदार्थफलप्रतिपादकैः सप्तविधार्थवादैरनुगृहीतं सन्महावाक्यमवान्तरवाक्यसहितं ब्रह्मणोऽद्वितीयत्वं, प्रत्यगात्मनस्तद्रूपत्वं च प्रतिपादयति ।

(१) तुलय—संक्षेप. शा. १. २४—६. (२) तै. उ. २. ७. (३) बृ. उ. २. ३. ३. (३) बृ. उ. २. ३. ५.

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

आनन्दैक्यवेदनफलं विदुषः कोशपञ्चको- पसंक्रमणम्

स य एवंवित् । अस्माल्लोकात्प्रेत्य । एतमन्न-मयमात्मानमुपसंक्रामति । एतं प्राणमयमा-त्मानमुपसंक्रामति । एतं मनोमयमात्मानमुप-संक्रामति । एतं विज्ञानमयमात्मानमुपसंक्रा-मति । एतमानन्दमयमात्मानमुपसंक्रामति ।

चेत्पुरुषगतविशेषोपमर्देन परमानन्दमपेक्ष्य समो भवति, न कश्चिदुत्कर्षोऽपक-र्षो वा तां गतिं गतस्येति 'अभयं प्रतिष्ठां विन्दते' इत्युपपन्नम् ।

अस्ति नास्तीत्यनुप्रश्नो व्याख्यातः—कार्यरसलाभप्राणनाभयप्रतिष्ठाभयद-

पूर्वोत्तरग्रन्थसंगतिः

र्शनोपपत्तिभ्योऽस्त्येव तदाकाशादिकारणं ब्रह्मेत्यपाकृतोऽनु-प्रश्न एकः । द्वावन्यावनुप्रश्नौ विद्वदविदुषोर्ब्रह्मप्राप्त्यप्राप्तिविषयौ । तत्र विद्वान् समश्नुते न समश्नुत इत्यनुप्रश्नोऽन्त्यः, तदपाकरणायोच्यते । मध्यमोऽनुप्र-श्नोऽन्त्यापाकरणादेवापाकृत इति तदपाकरणाय न यत्यते ।

स यः कश्चिदेवं यथोक्तं ब्रह्म, उत्सृज्योत्कर्षापकर्षम्, अद्वैतं, सत्यं, ज्ञानमन-

---

शिरःपाण्यादिमति पुरुषे प्रतिविम्बित इति परमानन्दमपेक्ष्य समत्वं—विशिष्टयोः स्वभावै-क्यं—विवक्षितमित्यर्थः ।

वृत्तानुवादपूर्वकमुत्तरग्रन्थमवतारयति—अस्ति नास्तीति । संदिग्धं सप्रयोजनं च विचारमर्हति—

---

(१) आदित्यमण्डलस्थब्रह्मणस्तत्पदार्थस्य साक्षिणा त्वंपदार्थेनैक्यमध्यारोपितोत्कर्षापकर्षकारणाविद्यानिराक-रणेनात्र बोध्यते । ततश्चादित्याधारत्वात्तदर्थस्योत्कृष्टत्वं, त्वमर्थस्य चान्तःकरणाधिकरणत्वेन रागादिकलुषित-त्वान्निकृष्टत्वम्—इत्याशंका न कर्तव्या । यथा यः सर्पः, स रज्जुरित्युच्यते; तथा बुद्धिस्थमपकृष्टत्वेन कल्पितं त्वंपदार्थमनूद्यादित्यमण्डलस्थेन प्रकृष्टतया कल्पितेन तत्पदार्थेनैक्यमत्र बोध्यते; तथा चोत्कर्षापकर्षहीनं सच्चि-दानन्दात्मकं वस्तु परिशिष्टं भवतीत्यर्थः । ईश्वरो हि जीवगतमपकृष्टत्वमपेक्ष्य स्वयमुत्कृष्टो व्यपदिश्यते । तच्च जीवगतमपकृष्टत्वं जीवानुवादेन तस्य ब्रह्मणा विशेष्यत्वे व्यावर्तते । ब्रह्म हि जीवस्य विशेषणं तद्गतमपकृष्टत्वं बलादेव बाधते । उत्कृष्टस्य निकृष्टं प्रति विशेषणत्वायोगाज्जीवगतापकर्षनिवृत्तौ च ब्रह्म स्वगतमुत्कर्षं परित्य-जति, तस्यापकर्षसापेक्षत्वात् । उत्कर्षापकर्षनिवृत्तावात्मनो ब्रह्मत्वं, ब्रह्मणश्चात्मत्वं सिध्यति । (२) तै. उ. २. ७. (३) °यद्धेतुद° इति पाठः । (४) विचारो हि प्रमाणव्यापारस्य फलावसानत्वनिश्चयहेतुस्तर्कः, स च प्रमेयमन्तरेण न प्रसरमुपलभते, प्रमितं च न बाध्यते—इति सद्वस्तुसिद्धिः । कोट्यन्तरस्फुरणं विना न संशयावतारः, तेन विना न विचारप्रवृत्तिः, तामृते न वस्तुतत्त्वनिर्णयः, तेन च विना न पुरुषार्थलाभः—इति विचारार्थतया यथाप्रतिपन्नं द्वैतमभ्युपगतं, न प्रामाणिकत्वेन;—तथा च भुजङ्गं रज्जुत्वेन व्यवहरत इव, अतत्त्वं तत्त्वबुध्या व्यवहरतोऽनर्थप्राप्तिसंभवात्, तत्परिहाराय विचारेऽवश्यम्भाविनि क्रियमाणे, सर्वेषु विशे-

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

आनन्दमयसंक्रमण-निर्देशेनैव पुच्छ-प्रतिष्ठाभूतब्रह्मप्राप्तेः फलस्य निर्देशः

न्तमस्मीत्येवं वेत्तीत्येवंवित्,—'एवं' शब्दस्य प्रकृतपरामर्शार्थत्वात्। स किम्? अस्माल्लोकात्प्रेत्य दृष्टादृष्टेष्टविषयसमुदायो ह्ययं लोकः, तस्मादस्माल्लोकात् 'प्रेत्य'–प्रत्यावृत्य—निरपेक्षो भूत्वैतं यथाव्याख्यातमन्नमयमात्मानमुपसंक्रामति विषयजातमन्नमयात्पिण्डात्मनो व्यतिरिक्तं न पश्यति—सर्वं स्थूलभूतमन्नमयमात्मानं पश्यतीत्यर्थः। ततोऽभ्यन्तरमेतं प्राणमयं सर्वान्नमयात्मस्थमविभक्तम्, अथैतं मनोमयं, विज्ञानमयं, आनन्दमयमात्मानमुपसंक्रामति, अथ "अदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते"।

द्वैताद्वैतचर्चा

तत्रैतच्चिन्त्यम्—कोऽयमेवंवित्? कथं वा संक्रामति? इति—किं परस्मादात्मनोऽन्यः संक्रमणकर्ता प्रविभक्तः? उत स एव? इति। किं ततः? यद्यन्यः स्यात्, श्रुतिविरोधः—"तत्सृष्ट्वा तदेवानुप्राविशत्", "अ-

---

अत्र च कस्मिन्पक्षे को दोषः को वा लाभ इत्याह—किं तत इति। उभयत्रानुपपत्तिं संशयकारणमाह—यद्यन्यः स्यादिति। चोद्यमुखेन संशयव्यावृत्तिं प्रयोजनमाह—यद्युभयथेत्यादिना। एतदेव मम विचारारम्भकस्य 'स्वस्त्ययनं' कल्याणं, यन्मामेकत्ववादिनं

---

षेष्वस्तितताया अव्यभिचाराद्विशेषणानां व्यभिचारान्मिथोव्यभिचारिणां चानृतत्वात् सन्मात्रमेव सत्यं न द्वैतरूपो विशेषाकारः। एवं च यथा विचारो निर्णयमन्तरेण न पर्यवस्यति, तथा सदद्वयं विना न विकल्पः प्रशाम्यति। अतः सर्पधारादण्डमालादिविकल्पेष्वनुगम्यमानतयाऽधिष्ठानत्वेन, पुनः सर्वविकल्पनिषेधावसानतयाऽवधित्वेनानुवर्तमानाविकल्पितानिषिद्धरज्जुस्वरूपवत्, अध्यात्मादिविकल्पाधिष्ठानसन्मात्रत्वेन तन्निषेधावधित्वेन चाविकल्पितमनपोद्यं चात्मतत्त्वमद्वयमस्तीत्येवोपलब्धव्यमिति तात्पर्यार्थः।

(१) 'उपसंक्रामति' विद्वान् 'प्राप्नोति' इत्येकदेशिनामर्थः। मुख्यसिद्धान्ते तु 'उपसंक्रमणं' विदुषः कोशानां प्रत्यङ्मात्रत्वेन विलापनमिति ज्ञेयम्। पदार्थपरिशोधनावस्थायां प्रथमं विराडात्मानमात्मत्वेन प्राप्य तत्कार्यं पुत्रपौत्रादिकं सर्वं तन्मात्रत्वेनापबाध्य, यथा 'अन्नमयोऽस्मि' इत्यवतिष्ठते, तथैवान्नमयमपि प्राणमयमात्रत्वेन बाधित्वा प्राणमयात्मरूपेण विद्वान् वर्तते; प्राणमयस्यापि पुनरभ्यन्तरमात्मानं मनोमयं प्राप्य तेनात्मना बाह्यं प्राणमयं स्वसामर्थ्यादेव जहाति, यथा कल्पितः सर्पो रज्जुं प्राप्य तत्स्वसामर्थ्यादेव सर्पत्वं मुञ्चति, एवमेव पूर्वस्य मनोमयस्य विज्ञानमयात्मना प्रहाणं; विज्ञानमयस्य च पूर्वस्यानन्दमयात्मनावस्थानं; तस्य चानन्दमयस्य पुच्छब्रह्ममात्रत्वेन स्थितिः—इति पदार्थविवेककुशलो निरूपयति। तथा निरूपणानन्तरं वाक्याद्वाक्यार्थं प्रतिपद्य कोशपञ्चकमपबाध्य निर्भये ब्रह्मणि तिष्ठतीत्यर्थः"। वार्तिकटीका. २.८.४७–८

बुभुत्सौ पुरुषेऽन्येषु मनुष्येषु च योऽस्ति यः। आदित्ये चान्यदेवेषु स आनन्दो न भिद्यते ॥१३६॥
परप्रेमास्पदत्वस्य लक्षणस्यैकरूपतः। लक्ष्यानन्दो न भिन्नः स्यादखण्डैकरसो ह्यतः ॥ १३७ ॥
एवं विद्वान् स्वपुत्रादेः कोशषट्कात्प्रकल्पितात्। व्युत्थायाखण्डैकरसे स्वानन्दे प्रतितिष्ठति ॥ १३८ ॥

—तैत्तिरीयकविद्याप्रकाशः

(२) तै. उ. २. ६.

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

न्योऽसावन्योऽहमस्मीति । न स वेद ", " एकमेवाद्वितीयम् ", " तत्त्वमसि " इति । अथ स एव " आनन्दमयमात्मानमुपसंक्रामति "—इति कर्मकर्तृत्वानुपपत्तिः, परस्यैव च संसारित्वं, पराभावो वा । यद्युभयथा प्राप्तो दोषो न परिहर्तुं शक्यत इति, व्यर्था चिन्ता; अथान्यतरस्मिन्पक्षे दोषाप्राप्तिः, तृतीये वा पक्षेऽदुष्टे, स एव शास्त्रार्थः—इति व्यर्थैव चिन्ता ।

न, तन्निर्धारणार्थत्वात् । सत्यं, प्राप्तो दोषो न शक्यः परिहर्तुमन्यतरस्मिन्; तृतीये वा पक्षेऽदुष्टेऽवधृते व्यर्था चिन्ता स्यात्; न तु सोऽवधृत इति तदवधारणार्थत्वादर्थवत्येवैषा चिन्ता । सत्यम्, अर्थवती चिन्ता, शास्त्रार्थावधारणार्थत्वात्; चिन्तयसि च त्वं, न तु निर्णेष्यसि । किं न निर्णेतव्यमिति वेदवचनम् ? न । कथं तर्हि ? वहुप्रतिपक्षत्वात्—एकत्ववादी त्वं, वेदार्थपरत्वात्; वहवो हि नानात्ववादिनो वेदवाह्यास्त्वत्प्रतिपक्षाः; अतो ममाऽऽशङ्का—न निर्णेष्यसीति ।

एतदेव मे स्वस्त्ययनं—यन्मामेकयोगिनमनेकयोगिवहुप्रतिपक्षमात्थ । अतो वाद्ययुत्सासमुत्साहः जेष्यामि सर्वान्; आरभे च चिन्ताम् ।

---

त्वमात्थ ब्रूषेऽविप्रतिपन्नवस्तुवादित्वात्—अनेकत्ववादिनोऽप्येकस्य वस्तुनः संमतत्वात्, अनेकवस्तुवादिनश्च बहवः प्रतिपक्षाः सन्ति ममेत्यर्थतोऽपि कल्याणम्—अनेकत्वस्यान्योन्याश्रयादिदोषदुष्टत्वात्, पूर्वपक्षनिराकारणेन सिद्धान्तोपपत्तेश्चेत्यर्थः ।

---

(१) बृ. उ. १. ४. १०. (२) छां. उ. ६. २. १. (३) छां. उ. ६. ८. ७. (४) पक्षत्रयेऽपि दोषस्य सत्त्वात्, अदुष्टपक्षनिर्धारणार्थं विचारः कर्तव्य इत्यर्थः । (५) " ननु सर्वे वादिनः द्वैतमेव परमार्थमवलम्बन्ते, युक्तिभिश्च बह्वीभिस्तदेवोपपादयन्ति, तथैव सर्वैरनुभूयते च, श्रुतिमपि द्वैतानुगुण्येनैव योजयन्ति । भवानेक एव तु अद्वैतं परमार्थं ब्रूते । अतो बहुप्रतिपक्षत्वात् त्वत्पक्षे कथं विश्वासः स्यात् ?—इत्याशङ्क्याह—न वादिबहुत्वैकत्वं वस्तुनिर्णये प्रयोजकम्, किंतु प्रमाणयुक्तिबाहुल्यमेव । नहि अन्धानां सहस्रं चक्षुष्मत एकस्य रूपविषये प्रतिवादी भवितुमर्हति । प्रमाणयुक्तिबाहुल्यं च अस्मत्पक्ष एव । इतरत्र च प्रमाणयुक्त्याभासबाहुल्यम् । "—हरितत्त्वमुक्तावली. २८.

ज्ञानी कामानेति सर्वान् रसो वै स इति श्रुतम् । ब्रह्मानन्दं स्फुटीकर्तुं मीमांसाऽऽनन्दगोच्यते ॥१३१॥
संपूर्णो मानुषानन्दः सार्वभौमे गुणैर्युते । हिरण्यगर्भे संपूर्णो देवानन्दोऽवधीहि तौ ॥ १३२ ॥
मध्यस्थे पूर्वपुण्यानामुत्कर्षाद्वर्धते सुखम् । सर्वेषां यत्सुखं तत्तु निष्कामे ज्ञानिनीष्यते ॥ १३३ ॥
सर्वकामाप्तिरेषाथ रसाख्यानन्द उच्यते । अध्यात्ममधिभूतं चाधिदैवं चैक एव सः ॥ १३४ ॥
सर्वे स्वस्वपदे तृप्ताः कामयन्ते न तत्पदम् । ज्ञानी तु दोषदृष्ट्यात्र निष्कामस्तैः समस्ततः ॥ १३५ ॥

—तैत्तिरीयकविद्याप्रकाशः

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

स एव तु स्यात्, तद्भावस्य विवक्षितत्वात्—तद्विज्ञानेन परमात्मभावो ह्यत्र विवक्षितः—"ब्रह्मविदाप्नोति परम्" इति। न ह्यन्यस्यान्यभावापत्तिरुपपद्यते। ननु तस्यापि तद्भावापत्तिरनुपपन्नैव। न, अविद्याकृतानात्माऽपोहार्थत्वात्—या हि ब्रह्मविद्यया स्वात्मप्राप्तिरुपदिश्यते, साऽविद्याकृतस्यान्नादिविशेषात्मन आत्मत्वेनाध्यारोपितस्यानात्मनोऽपोहार्था। कथमेवमर्थताऽवगम्यते? विद्यामात्रोपदेशात्–विद्यायाश्च दृष्टं कार्यमविद्यानिवृत्तिः; तच्चेह विद्यामात्रमात्मप्राप्तौ साधनमुपदिश्यते। मार्गविज्ञानोपदेशवदिति चेत्, तदात्मत्वे विद्यामात्रसाधनोपदेशोऽहेतुः। कस्मात्? देशान्तरप्राप्तौ मार्गविज्ञानोपदेशदर्शनात्। न हि ग्राम एव गन्ता—इति चेत्—न, वैधर्म्यात्। तत्र हि ग्रामविषयं विज्ञानं नोपदिश्यते, तत्प्राप्तिमार्गविषयमेवोपदिश्यते विज्ञानम्; न तथेह ब्रह्मविज्ञानव्यतिरेकेण साधनान्तरविषयं विज्ञानमुपदिश्यते। उक्तकर्मादिसाधनापेक्षं ब्रह्मविज्ञानं परप्राप्तौ साधनमुपदिश्यत इति चेत्—न; नित्यत्वान्मोक्षस्येत्यादिना प्रत्युक्तत्वात्; श्रुतिश्च "तत्सृष्ट्वा तदेवानुप्राविशत्" इति कार्यस्थस्य तदात्मत्वं दर्शयति; अभयप्रतिष्ठोपपत्तेश्च—यदि हि विद्यावान्स्वात्मनोऽन्यन्न पश्यति, ततः "अभयं प्रतिष्ठां विन्दते" इति स्यात्, भयहेतोः परस्यान्यस्याभावात्; अन्यस्य चाविद्याकृतत्वे, विद्ययाऽवस्तुत्वदर्शनोपपत्तिः; तद्धि द्वितीयस्य चन्द्रस्य सत्त्वं, यदतैमिरिकेण चक्षुष्मता न गृह्यते। नैवं न गृह्यत

(द्वैतस्याविद्याकृतत्वात्, अद्वैतं परमार्थः)

(अभेदपक्ष एवाभयप्रतिष्ठोपपत्तिः)

---

विचारारम्भमुपपाद्य, सिद्धान्तमुपक्रमते—स एव तु स्यादिति। औपाधिकभेदभिन्नोऽप्येवंवित्स्वतः पर एव स्यादित्यर्थः। अविद्याध्यारोपिताब्रह्मत्वव्यावृत्तिरेव ब्रह्मप्राप्तिर्विवक्षितेति फलवाक्यस्यैवमर्थता कथमवगम्यते न पुनरप्राप्तप्राप्तिः? इत्याह—कथमिति। परिहरति—विद्यामात्रेति। अन्यथाऽभ्युपपत्तिं शङ्कते—मार्गेति। गन्तुः स्वतो ग्रामत्वाभावेऽपि, यथा मार्गज्ञानोपदेशः सार्थकतया जीवस्य स्वतो ब्रह्मत्वाभावेऽपि, विद्योपदेशोऽभ्यासद्वारेण ब्रह्मप्राप्तिहेतुत्वाद्, इत्यर्थः। 'त्वं ग्रामोऽसि' इति न तत्रोपदेशः, अत्राभेदोपदेशः प्रतीयते, अत उपदेशवैषम्यान्न दृष्टान्तो युक्त इत्याह—न वैधर्म्यादिति। यदि विदुषः सकाशादन्य ईश्वरो भयहेतुर्नास्ति, का तर्हि गतिर्व्यतिरिक्तेश्वरदर्शनस्य इत्याशङ्क्याऽऽह—अन्यस्य चेति। कल्पितभेदविशिष्टरूपेणेश्वरस्याविद्याकृतत्वे–मिथ्यात्वे सति, विद्यया तत्रावस्तुत्वदर्शनमुपपद्यते–ईश्वरो मम प्रशास्तेति मिथ्यैतद्यतः, तस्य मम चैकात्म्यमेव

---

(१) जीवस्य सदा ब्रह्मभावे "ब्रह्म वेद ब्रह्मैव भवति" इति श्रुतिरनुपपन्नेति शंकते। (२) °तातादाम्या°—पाठः। (३) °न्द्रस्यास° इति पाठः।

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

इति चेत्—न; सुषुप्तसमाहितयोरग्रहणात् । सुषुप्तेऽग्रहणमन्यासक्तवदिति चेत्—न; सर्वाग्रहणात् । जाग्रत्स्वप्नयोरन्यस्य ग्रहणात्सत्त्वमेवेति चेत्—न; अविद्याकृतत्वाज्जाग्रत्स्वप्नयोः—यदन्यग्रहणं जाग्रत्स्वप्नयोः, तदविद्याकृतम्, विद्याभावेऽभावात् ।

सुषुप्तेऽग्रहणमप्यविद्याकृतमिति चेत्—न, स्वाभाविकत्वात्; द्रव्यस्य हि तत्त्वमविक्रिया, परानपेक्षत्वात्; विक्रिया न तत्त्वं, परापेक्षत्वात्; न हि कारकापेक्षं वस्तुनस्तत्त्वं, सतो विशेषः कारका-

द्वैताग्रहणमात्मनः स्वतःसिद्धम्

---

परमार्थम्, इति विद्वद्दृष्ट्या विशिष्टस्यासत्त्वमित्यर्थः । दृष्टान्तेन वैषम्यं शङ्कते—नैवमिति । यथा चन्द्रैकत्वदर्शिना द्वितीयश्चन्द्रो न गृह्यते, नैवं ब्रह्मविदा न गृह्यते व्यतिरिक्तेश्वरः—प्रतिनियतप्रपञ्चावभासस्य भोजनादिप्रवृत्त्यन्नुपपत्त्या जीवन्मुक्तस्याप्यभ्युपगमात् प्रपञ्चप्रतिनियमस्य चेश्वराधीनत्वाभ्युपगमादित्यर्थः । यद्यपि जागरे व्यतिरेकाभासदर्शनं विदुषः, तथाऽपि न तद्भयकारणं,—न हि मायावी स्वविरचितव्याघ्राभासाद्बिभेति । अविदुषोऽपि व्यतिरेकदर्शनं न सदातनमित्याह—न; सुषुप्तेति । सुषुप्ते व्यतिरेकाग्रहणमसत्त्वसाधकं न भवतीत्याह—सुषुप्त इति—यथेषुकार इष्वासक्तमनस्तया तद्व्यतिरिक्तं विद्यमानमपि न पश्यति, तथा सुषुप्तेऽपि निरायाससुखासक्ततया सदपि द्वितीयं न पश्यति, न त्वभावादित्यर्थः । अन्यासक्तस्य तद्व्यतिरिक्तादर्शनेऽपि तद्दर्शनमेवास्ति, सुषुप्ते तु न 'किंचिदज्ञासिषम्' इति प्रत्ययात् सुखस्याप्यात्मतादात्म्यात्, अज्ञानस्य च व्यतिरिक्तत्वानिर्वचनात्—अतस्तात्त्विकद्वितीयाभावादेवाग्रहणमित्याह—न सर्वाग्रहणादिति । सुषुप्ते चेदनुपलम्भादसत्त्वं, तर्हि जाग्रत्स्वप्नयोरुपलम्भाद्द्वैतस्य सत्त्वं किं न स्यात्?—इत्याह—जाग्रदिति । अनात्मादावात्मत्वादिबुद्धिरविद्या—तद्भाव एव द्वैतोपलम्भात्; नोपलम्भमात्रं सत्त्वसाधकम्, अन्यथा शुक्तिरूप्यादेरपि सत्त्वप्रसङ्गादित्याह—नाविद्येति ।

पूर्ववाद्याह–सुषुप्त इति । सुषुप्ते द्वितीयस्याग्रहणमपि लयरूपाविद्याकृतं, न तु भेदभावनिबन्धनम्; अतो यदुक्तं सुषुप्ते सर्वात्मकब्रह्मभूतो जीवः स्वव्यतिरिक्तमभावादेव न पश्यतीति, तदसदित्यर्थः । सतोऽपि द्वितीयस्याविद्यावशादग्रहणमिति कोऽर्थः? किं ग्रहणप्रागभावो जायते, उताप्रकाशारोपः, किंवा ग्रहणाकाराविकृतस्वरूपावस्थानम्? नाऽऽद्यः—प्रागभावस्यानादित्वाभ्युपगमात् । न द्वितीयः—परैर्द्वितीयस्यास्वप्रकाशतास्वाभाव्याभ्युपगमेनाप्रकाशारोपानभ्युपगमात्, अप्रकाशारोपे च सर्वस्य स्वप्रकाशब्रह्मात्मताया अभ्युपगन्तव्यत्वेनास्मत्समीहित-

---

(१) द्वैतस्य कदाचिद्ग्रहेऽपि कदाचिद्ग्रहाव्यभिचारायुक्तं मिथ्यात्वमित्यर्थः । (२) अविद्याभावेऽभावात्—पाठः । (३) °दर्शनाद्द्विती°—पाठः । (४) तुल्य—"इषुकारो नरः कश्चिदिषावासक्तमानसः । समीपेनापि गच्छन्तं राजानं नावबुद्धवान्" ॥ शान्ति. प. १७८. १२.

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

पेक्षः, विशेषश्च विक्रिया । जाग्रत्स्वप्नयोश्च ग्रहणं विशेषः; यद्धि यस्य नान्या-पेक्षं स्वरूपं, तत्तस्य तत्त्वम्; यदन्यापेक्षं, न तत्तत्त्वम्, अन्याभावेऽभावात्;— तस्मात्स्वाभाविकत्वाज्जाग्रत्स्वप्नवन्न सुषुप्ते विशेषः ।

येषां पुनरीश्वरोऽन्य आत्मनः, कार्यं चान्यत्, तेषां भयानिवृत्तिर्भयस्यान्य-निमित्तत्वात्, सतश्चान्यस्याऽऽत्महानानुपपत्तिः, न चासत आत्मलाभः । सापेक्षस्यान्यस्य भयहेतुत्वमिति चेन्न, तस्यापि तुल्यत्वात्—यद्धर्माद्यनुसहायीभूतं नित्यमनित्यं वा निमित्तमपेक्ष्य, अन्यद्भ-यकारणं स्यात्, तस्यापि तथाभूतस्याऽऽत्महानाभावाद्भयानिवृत्तिः, आत्महाने वा सदसतोरितरेतरापत्तौ सर्वत्रानाश्वास एव ।

भेदपक्षेऽभयप्रतिष्ठानुपपत्तिः

एकत्वपक्षे पुनः सनिमित्तस्य संसारस्याविद्याकल्पितत्वाददोषः—तैमिरि-कदृष्टस्य हि द्वितीयचन्द्रस्य नाऽऽत्मलाभो नाशो वाऽस्ति ।

---

सिद्धिप्रसङ्गात् । न तृतीयः–इत्याह—न स्वाभाविकत्वादिति । अविकृतस्वरूपावस्थानं नाविद्याकार्यम्, अनागन्तुकत्वादित्यर्थः । एतत्स्फुटयति—द्रव्यस्य हीत्यादिना । सन्मात्रं द्रव्यमुच्यते, स्वातन्त्र्यसिद्ध्यभिप्रायेण, न वैशेषिकाभिप्रायेण क्रियावद्गुणवत्समवायिका-रणं द्रव्यं–मानाभावात्, इति द्रष्टव्यम् । अविक्रियेति । विक्रियाभावोपलक्ष्यं स्वरूपमन-पेक्ष्य सिद्धत्वादित्यर्थः। ग्रहणादिविक्रिया न स्वाभाविकी, परापेक्षत्वात्, स्फटिकलौहित्यवत्—इत्यर्थः । यदुक्तमनपेक्ष्य सिद्धत्वादविक्रियत्वमिति, तत्स्फुटयति—यद्धीति ।

एवं स्वमते चित्सत्ताव्यतिरिक्तेश्वरस्य भयहेतोरभावादभयं विदुषः संभवतीत्युपपाद्य, द्वैतीयपक्षे तदसंभवमाह—येषामिति । सतोऽन्यस्य स्वरूपे स्थिते, नष्टे वा, मा भूद्ध्वंसो व्याघातादनवस्थानाच्च । तर्ह्यसत एव भयस्योत्पादेऽभयप्राप्तिर्भविष्यतीत्याशङ्क्याऽऽह—न चासत इति । व्यतिरिक्तेश्वरस्य सत्तामात्रेण न भयहेतुत्वं, किंतु प्राणिकृतधर्माधर्माद्यपेक्षस्य; मुक्तस्य तु तदभावादभयं भविष्यतीत्याशङ्क्य नैतत्सांख्येन वाच्यम्, अधर्मादेरपि सतस्ते-नात्यन्तासत्त्वानङ्गीकारात्, नैयायिकादिमतेऽपि सति हेतौ कार्यात्यन्ताभावस्य दुरवधारण-त्वात्तेनापि न वाच्यमित्याह—न तस्यापीति । किंच सच्चेदसत्त्वमापद्यतेऽधर्मादिकं, तर्ह्या-त्मन्यपि कः प्रश्वासः? तस्मात्स्वभाववैपरीत्यं सतोऽसत्त्वगमनं कस्यापि मते न घटत इत्याह—सदसतोरिति ।

स्वमतं निगमयति—एकत्वपक्ष इति। अविद्याकल्पितं भयं विद्यया निवर्तत इति वदता विद्याविद्ययोरात्मधर्मत्वमिष्टं, ततो धर्मोत्पादविनाशयोर्विकारित्वमनित्यत्वं च प्रसज्येतेति

---

(१) 'अग्रहणाकाराविकृतस्वरूपावस्था तस्य'। (२) °रात्मानात्मनोः स°—इति पाठः। (२) एवाभ°—इति पाठः ।

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

विद्याविद्ययोस्तद्धर्मत्वमिति चेन्न, प्रत्यक्षत्वात्—विवेकाविवेकौ रूपादिवत्प्रत्यक्षावुपलभ्येते अन्तःकरणस्थौ; न हि रूपस्य प्रत्यक्षस्य सतो द्रष्टृधर्मत्वम्। अविद्या च स्वानुभवेन रूप्यते—'मूढोऽहमविविक्तं मम विज्ञानम्' इति। तथा विद्याविवेकोऽनुभूयते, उपदिशन्ति चान्येभ्य आत्मनो विद्यां बुधाः, तथा चान्येऽवधारयन्ति, तस्मान्नामरूपपक्षस्यैव विद्याविद्ये, नामरूपे च नाऽऽत्मधर्मौ—"नामरूपयोर्निर्वहिता, ते यदन्तरा; तद्ब्रह्म" इति श्रुत्यन्तरात्। ते च पुनर्नामरूपे सवितर्यहोरात्रे इव कल्पिते, न परमार्थतो विद्यमाने।

*विद्याविद्ये नात्मधर्मौ*

अभेदे, "एतमानन्दमयमात्मानमुपसंक्रामति" इति कर्मकर्तृत्वानुपपत्तिरिति चेन्न; विज्ञानमात्रत्वात्संक्रमणस्य, न जलूकादिवत्संक्रमणमिहोपदिश्यते। किं तर्हि ? विज्ञानमात्रं संक्रमणश्रुतेरर्थः।

*संक्रमणम्=विज्ञानम्, बाधः*

ननु मुख्यमेव संक्रमणं श्रूयत उपसंक्रामतीति—इति चेत्, न; अन्नमयेऽदर्शनात्—न ह्यन्नमयमुपसंक्रामतो बाह्यादस्माल्लोकाज्जलूकावत्संक्रमणं दृश्यते, अन्यथा वा। मनोमयस्य बहिर्निर्गतस्य विज्ञानमयस्य वा पुनः प्रत्यावृत्त्याऽऽत्मसंक्रमणमिति चेत्, न; स्वात्मनि क्रियाविरोधात्, अन्योऽन्नमयमन्यमुपसंक्रामतीति प्रकृत्य, मनोमयो विज्ञानमयो वा स्वात्मानमेवोपसंक्रामतीति विरोधः स्यात्।

---

शङ्कते—विद्याविद्ययोरिति। कल्पितयोर्विद्याविद्ययोरात्मनि भयाभयहेतुत्वसंभवान्नाऽऽत्मधर्मत्वे प्रमाणमस्ति, प्रत्युत वेद्यत्वाद्रूपादिवदात्मधर्मत्वं नास्तीत्यनुमातुं शक्यत इत्याह—न, प्रत्यक्षत्वादिति। चिन्मात्रतन्त्राऽनादिरनिर्वाच्याऽविद्याऽन्तःकरणरूपेण परिणमते; तच्चान्तःकरणं तामससात्त्विकावस्थाभेदेन भ्रान्तिसम्यग्ज्ञानाकारेण परिणमते, तस्मिन्प्रतिबिम्बितश्चिद्धातुः स्वोपाधिधर्मेणैव भ्रान्तः सम्यग्दर्शीति च व्यवह्रियते, न तत्त्वतो विद्याविद्यावत्त्वमित्याह—ते च पुनरिति। उक्तन्यायेन ब्रह्मवित्तत्त्वतो ब्रह्माभिन्न इत्युक्तम्, तत्र परोक्तमुद्भाव्य निरस्यति—अभेदे, एतमित्यादिना। नाऽनन्दमयः परमात्मा, न च तत्र प्रवेशः संक्रमणं, किंत्वविषयब्रह्मात्मताज्ञानेनाऽऽनन्दमयस्याऽऽत्मतया भ्रान्तिगृहीतस्यातिक्रमणं बाधोऽत्र विवक्षित इत्यर्थः।

अन्यथा वेति। नीडे पक्षिप्रवेशवद्वेत्यर्थः। यद्यप्यन्नमये मुख्यं संक्रमणं न संभवति, तथाऽपि मनोबुद्ध्योर्बहिर्विषये प्रवृत्तयोस्ततो व्यावृत्त्य, स्वरूपेऽवस्थानं संक्रमणं दृष्टं, तथा दुःखिन आनन्दमयस्य स्वरूपेऽवस्थानं संक्रमणं भविष्यतीत्याह—मनोमयस्येति। स्वरू-

---

(१) °न निरू°—इति पाठः। (२) °र्मौ। आकाशो ह वै नाम ना°—इति पाठः। (३) छां. उ. ८. १४. १. निर्वहिता–निर्वोढा–व्याकर्ता; यस्य ब्रह्मणोऽन्तरा–मध्ये वर्तेते। (४) दृढसंयोगरूपप्राप्तिः।



CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

## तदप्येष श्लोको भवति ।

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि ब्रह्म—आनन्द—वल्ल्यां अष्टमोऽनुवाकः ॥ ८ ॥

---

तथा नाऽऽनन्दमयस्याऽऽत्मसंक्रमणमुपपद्यते । तस्मान्न प्राप्तिः संक्रमणं, नाप्यन्नमयादीनामन्यतमकर्तृकम्; पारिशेष्यादन्नमयाद्यानन्दमयान्तात्मव्यतिरिक्तकर्तृकं ज्ञानमात्रं संक्रमणमुपपद्यते । ज्ञानमात्रत्वे च आनन्दमयान्तःस्थस्यैव, सर्वान्तरस्य, आकाशाद्यन्नमयान्तं कार्यं सृष्ट्वाऽनुप्रविष्टस्य—हृदयगुहाभिसंबन्धादन्नमयादिष्वनात्मस्वात्मविभ्रमः संक्रमणात्मकविवेकविज्ञानोत्पत्त्या विनश्यति । तदेतस्मिन्नविद्याविभ्रमनाशे संक्रमणशब्द उपचर्यते; न ह्यन्यथा सर्वगतस्याऽऽत्मनः संक्रमणमुपपद्यते । वस्त्वन्तराभावाच्च—न च स्वात्मन एव संक्रमणम्—न हि जलूकाऽऽत्मानमेव संक्रामति । तस्मात् "सत्यं ज्ञानमनन्तं ब्रह्म" इति यथोक्तलक्षणात्मप्रतिपत्त्यर्थमेव बहुभवनसर्गप्रवेशरसलाभाभयसंक्रमणादि परिकल्प्यते ब्रह्मणि सर्वव्यवहाराविषये, न तु परमार्थतो निर्विकल्पे ब्रह्मणि कश्चिदपि विकल्प उपपद्यते ।

तमेतं निर्विकल्पमात्मानमेवं क्रमेणोपसंक्रम्य—विदित्वा—'न बिभेति कुतश्चन', 'अभयं प्रतिष्ठां विन्दते' इत्येतस्मिन्नर्थेऽप्येष श्लोको भवति, सर्वस्यैवास्य प्रकरणस्याऽऽनन्दवल्ल्यर्थस्य संक्षेपतः प्रकाशनायैष मन्त्रो भवति ।

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवतः कृतौ तैत्तिरीयोपनिषदि ब्रह्म—आनन्द—वल्लीभाष्येऽष्टमोऽनुवाकः ॥ ८ ॥

---

पावस्थानस्यानागन्तुकत्वात्प्रक्रमविरोधाच्च न तन्मुख्यं संक्रमणमित्याह—नेति । ज्ञानमात्रत्वे वा संक्रमणस्य किं फलतीत्यत आह—ज्ञानमात्रत्वे चेति । मुख्यासंभवे गौणार्थग्रहणं न्याय्यमेव, अतोऽधिष्ठानयाथात्म्यप्रतिपत्त्या विशिष्टस्याध्यस्तस्य बाधनमेव संक्रमणं फलतीति भावः । इतश्च न मुख्यं संक्रमणमन्वेषणीयमित्याह—वस्त्वन्तराभावाच्चेति । संक्रमणस्यौपचारिकत्वं व्याख्याय प्रकरणस्य महत्तात्पर्यमुपसंहारच्छलेनाऽऽह—तस्मादिति ।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दशिष्यानन्दज्ञानविरचिते तैत्तिरीयोपनिषच्छांकरभाष्यटिप्पणे ब्रह्म—आनन्द—वल्ल्यामष्टमोऽनुवाकः ॥ ८ ॥

---

(१) °मणेनाऽऽत्मवि°—पाठः । (२) °रसाभ°; °रसमयाभ° पाठौ । (३) संव्यवहारविषये, सर्वव्यवहारविषये वा—पाठांतरम् ।

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

## अथ नवमोऽनुवाकः

### ( निर्विकल्पं ब्रह्म )

ब्रह्मणोऽवाङ्-मनसगोचरत्वम्

यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान् । न बिभेति कुतश्चनेति ।

यतो यस्मान्निर्विकल्पाद्यथोक्तलक्षणादद्वयानन्दादात्मनो वाचोऽभिधानानि द्रव्यादिसविकल्पवस्तुविषयाणि वस्तुसामान्यान्निर्विकल्पेऽद्वयेऽपि ब्रह्मणि प्रयोक्तृभिः प्रकाशनाय प्रयुज्यमानानि 'अप्राप्य' अप्रकाश्यैव निवर्तन्ते स्वसामर्थ्याद्धीयन्ते । 'मनः' इति प्रत्ययो—विज्ञानम्; तच्च, यत्राभिधानं प्रवृत्तमतीन्द्रियेऽप्यर्थे, तदर्थे च प्रवर्तते प्रकाशनाय; यत्र च विज्ञानं, तत्र वाचः प्रवृत्तिः; तस्मात्सहैव वाङ्मनसयोः—अभिधानप्रत्यययोः प्रवृत्तिः सर्वत्र ।

विद्या भयनाशहेतुः

तस्माद्ब्रह्मप्रकाशनाय सर्वथा प्रयोक्तृभिः प्रयुज्यमाना अपि वाचो यस्मादप्रत्ययविषयादनभिधेयाददृश्यादिविशेषणात्सहैव 'मनसा' विज्ञानेन सर्वप्रकाशनसमर्थेन—निवर्तन्ते, तं ब्रह्मण आनन्दं श्रोत्रियस्यावृजिनस्याकामहतस्य सर्वैषणाविनिर्मुक्तस्याऽऽत्मभूतं विषयविषयिसंबन्धविनिर्मुक्तं स्वाभाविकं नित्यमविभक्तं परमानन्दं ब्रह्मणो विद्वान्यथोक्तेन विधिना न बिभेति कुतश्चन निमित्ताभावात्—न हि तस्माद्विदुषोऽन्यद्वस्त्वन्तरमस्ति, भिन्नं, यतो बिभेति । अविद्यया "यदा...उदरमन्तरं कुरुते । अथ तस्य भयं भवति" इति युक्तम्, विदुषश्चाविद्याकार्यस्य, तैमिरिकदृष्टद्वितीयचन्द्रवत्, नाशाद्भयनिमित्तस्य 'न बिभेति कुतश्चन' इति युज्यते । मनोमये चोदाहृतो मन्त्रो मनसो ब्रह्मविज्ञानसाधनत्वात् । तत्र ब्रह्मत्वमध्यारोप्य, तत्स्तुत्यर्थं 'न बिभेति कदाचन' इति भयमात्रं प्रतिषिद्धम् । इहाद्वैतविषये 'न बिभेति कुतश्चन' इति भयनिमित्तमेव प्रतिषिध्यते ।

नन्वस्ति भयनिमित्तं साध्वकरणं पापक्रिया च । नैवम् । कथमिति? उच्यते—

---

( १ ) यानि लोके द्रव्यगुणाद्यनात्मविषये श्रोतृबुद्धिसिद्ध्यर्थं प्रयोक्तृभिः—वृद्धैर्वचांसि प्रयुक्तानि प्रतीयन्ते, तानि स्वार्थे प्रवृत्तिहेतोः षष्ठ्यादेर्निवृत्त्यैव ब्रह्मणो निवर्तन्ते; तस्मान्न ब्रह्मणो वाच्यता । ( २ ) तै. उ. २. ४. ( ३ ) ननु 'यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह' इत्याद्युपदेशः कथं प्रपञ्चमिथ्यात्वपर्यवसायी ? उच्यते—इदं हि प्रकरणमध्यारोपापवादाभ्यां निष्प्रपञ्चब्रह्मस्वरूपनिष्कर्षार्थम् । तथाहि—उपक्रमे तावत् 'ब्रह्मविदाप्नोति परम्' इति ब्रह्मविदस्तद्भावापत्तिलक्षणा मुक्तिरुक्ता । न तु तत्प्राप्तिलक्षणा । बृहदारण्यके

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

पुण्यपापयोस्तापहेतुत्वम्

एतꣳ ह वाव न तपति । किमहꣳ साधु नाकरवम् । किमहं पापमकरवमिति ।

एतं यथोक्तमेवंविदम्; ह वावेत्यवधारणार्थौ । न तपति नोद्वेजयति—न संतापयति । कथं पुनः साध्वकरणं पापक्रिया च न तपति ? इत्युच्यते—किं कस्मात्साधु शोभनं कर्म नाकरवं न कृतवानस्मीति पश्चात्संतापो भवत्यासन्ने

---

" स यदाह–असतो मा सद्गमयेति मृत्युर्वासत् सदमृतं मृत्योर्माऽमृतं गमय अमृतं मा कुर्वित्येवैतदाह " ( १. ३. २८. ) इति सच्छब्दोक्तामृतावाप्त्यर्थत्वश्रुतेरमृताभेदाभिव्यक्त्यर्थतया व्याख्यातत्वेन मुक्तिफलप्रतिपादकेषु वाक्येषु ब्रह्मावाप्तिश्रवणानां तद्भावापत्तिपरत्वावगमात् । ततश्च किं तद्ब्रह्म ? कीदृशं तद्वेदनम् ? कीदृशी च तद्भावापत्तेः पुरुषार्थरूपता ?—इत्याकाङ्क्षायां " सत्यं ज्ञानमनन्तं ब्रह्म " इति स्वरूपलक्षणेन ब्रह्मस्वरूपं निर्धार्य "यो वेद निहितं गुहायाम्" इति तद्ब्रह्म जीवस्वरूपेण हृदयगुहायां निवेशितं जीवाभिन्नं 'यो वेद' इति तद्वेदनं जीवाभेदविषयमिति प्रदर्श्य तत्फलभूतायास्तद्भावापत्तेर्निरतिशयपुरुषार्थरूपत्वं ' सोऽश्नुते ' इत्यादिना प्रतिपादितम् । तत्र ' ब्रह्मणा ' इतीत्थंभूतलक्षणे तृतीया । तथाच ब्रह्मणा रूपेण सर्वान् कामान् सह युगपदश्नुते । सर्वेषामैहिकामुष्मिकाणां काम्यानां क्रमिकेणोपभोगेन यावत्सुखमभिव्यङ्ग्यं तत्सर्वं ब्रह्मसुखाम्बुधिकणिकायमानमिति विद्ययाऽभिव्यक्तं निरतिशयं ब्रह्मसुखाम्बुधिमनुभवतीत्यर्थः । न तु ब्रह्मणा सह सर्वान् विषयभोगानश्नुते–इत्यर्थः । ब्रह्मणा सह–इत्यन्वयस्य "सोऽश्नुते सर्वान् कामान् सह ' इत्यत्राध्ययनसंप्रदायप्राप्तवाक्यविच्छेदाननुगुणत्वात् । सहार्थतृतीयया ब्रह्मणः कर्मसाहित्ये कर्तृसाहित्ये वा विवक्षिते भोग्यविषयापेक्षया भोक्तृजीवापेक्षया वा अप्राधान्यप्रसङ्गेन ब्रह्मणो निरतिशयपुरुषार्थत्वस्य निरतिशयैश्वर्यस्य वा हानिप्रसङ्गाच्च । न च 'सर्वान् कामान्' इत्यस्य स्वारस्यहानिः । न ह्यस्मिन्मते कामशब्दः स्रक्चन्दनादिविषयवाची । किंतु तत्संबन्धाभिव्यङ्ग्यसुखवाची, तेषामेव निरुपाधिककामनाविषयत्वात् । ततश्च त्रैकालिकानि सर्वजीवानुभाव्यानि सर्वाण्यपि सुखानि ' एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति ' इति श्रुतेर्ब्रह्मानन्दसिन्धोर्बिन्दुकणिका इति ब्रह्मरूपेण स्वाभिन्नमखण्डानन्दमनुभवता सर्वाण्यपि सुखान्यनुभूयन्त एव । यथा सर्वेषु जीवेषु भूगोलकादेरेकैकं भागं पश्यत्सु सर्वदृग्विषया भागाः सर्वज्ञेनानुभूयन्ते—इति न कापि स्वारस्यहानिः । प्रत्युत ' सर्वान् कामान् ' इत्यस्यासंकोचलाभादत्रैव स्वारस्यम् । तस्मात् 'सोऽश्नुते' इत्यादेर्यथोक्त एवार्थः । अत एवोपबृंहितं ब्रह्मगीतासु—" सोऽश्नुते सकलान् कामानक्रमेण सुरर्षभाः । विदितब्रह्मरूपेण जीवन्मुक्तो न संशयः" ॥ ( ३. ३२. ) इति । ततश्च ब्रह्मणो लक्षणे आनन्त्यान्तर्गतं वस्तुपरिच्छेदराहित्यं प्रपञ्चस्य प्रतिपन्नोपाधिगतनिषेधप्रतियोगित्वलक्षणमिथ्यात्वेनोपपादयितुम् " आत्मन आकाशः " इत्यादिना ब्रह्मणो जगदुपादानत्वप्रतिपादनेन तत्र प्रपञ्चाध्यारोपः कृतः । ब्रह्मण उपादानत्वेऽपि सृष्टिनियमनादिषु निमित्तान्तरसद्भावे वस्तुपरिच्छेदः स्यादिति शङ्कानिरासार्थम् " सोऽकामयत " इति सृष्टौ, " भीषाऽस्माद्वातः पवते " इति नियमनेऽपि निमित्तत्वं दर्शितम् । एवमारोपितस्य प्रपञ्चस्य " यतो वाचो निवर्तन्ते " इत्यत्रापवाद उपदिश्यते । अस्य हि मन्त्रस्यायमर्थः—यथा शुक्तिकायामध्यस्तरजततादात्म्योल्लेखितया प्रवृत्तेन मनसा सह ' रजतमिदम् ' इति व्यवहारः शुक्तित्वपर्यन्तमप्राप्य, ' नेदं रजतम् ' इति बाधे सति निवर्तते, एवं ब्रह्मण्यध्यस्तप्रपञ्चतादात्म्योल्लेखितया ' सन् घटः, सन् पटः ' इत्यादिप्रकारेण प्रवृत्तेनान्तःकरणेन सह तत्र प्रवृत्ता घटपटादिशब्दा अप्यखण्डाकारपर्यन्तमप्राप्य " अथात आदेशो नेति नेति " ( बृ. उ. २. ३. ६. ) इत्यादिश्रौतबाधे सति निवर्तन्ते—इति । न्यायरक्षामणिः १. १. १७.

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

आत्मज्ञानस्य तापनिवारकत्वम्

स य एवं विद्वानेते आत्मानꣳ स्पृणुते ।
उभे ह्येवैष एते आत्मानꣳ स्पृणुते ।
य एवं वेद ।

इत्युपनिषत् ।

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि ब्रह्म—आनन्द—वल्ल्यां
नवमोऽनुवाकः ॥ ९ ॥

---

मरणकाले; तथा किं कस्मात्पापं प्रतिषिद्धं कर्माकरवं कृतवानस्मीति च नरकपतनादिदुःखभयात्तापो भवति; ते एते साध्वकरणपापक्रिये एवमेनं न तपतः, यथाऽविद्वांसं तपतः ।

कस्मात्पुनर्विद्वांसं न तपतः? इत्युच्यते—

स य एवंविद्वान् एते साध्वसाधुनी तापहेतू इत्यात्मानं स्पृणुते प्रणियाति, बलयति वा—परमात्मभावेनोभे पश्यतीत्यर्थः ।

उभे पुण्यपापे हि यस्मादेवमेष विद्वानेते आत्मानमात्मरूपेणैव पुण्यपापे स्वेन

---

साध्वसाधुनी स्तः, प्रकाशेते चेति सत्प्रकाशमात्रमात्मतत्त्वमेव तयोः स्वरूपं, ततोऽतिरिक्तं यदर्थानर्थहेतुत्वं नामविशेषरूपं, तन्न वस्तु—सत्प्रकाशान्यत्वेनासत्त्वात्, अप्रकाशमानत्वाचेत्यभिप्रेत्याऽऽह—स्वेन विशेषरूपेणेति । आत्मैवाविद्यया साध्वसाधुरूपेण प्रतिपन्न आसीत्; इदानीं तु ये साध्वसाधुनी ममार्थानर्थहेतू बभूवतुः, ते आत्मैव, इति ज्ञानेन स्वात्मानं साध्वसाधुकरणेन प्रीणयत्येव—लोकदृष्ट्या निष्पद्यमाने पुण्यपापे दृष्ट्वा हृष्यति विद्वान्न बिभेतीत्याह—स्पृणुत एवेति ।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दशिष्यानन्दज्ञानविरचिते तैत्तिरीयोपनिषच्छांकरभाष्यटिप्पणे ब्रह्म—आनन्द—वल्ल्यां नवमोऽनुवाकः ॥ ९ ॥

---

( १ ) आत्मनो बलस्य स्वाभाविकत्वात् किं विद्याकृतेन बलेन ?—इत्याशंक्याऽऽह—अविद्येति । आत्मबलस्य स्वाभाविकत्वेऽप्यविद्याकृतदौर्बल्यस्य विद्यया निरसने स्वाभाविकबलाभिव्यक्तेः, विद्याधीनमस्य बलमभीष्टमित्यर्थः ।

सार्वभौमादिकानन्दाः पूर्वेभ्यः शतसंख्यया । परेऽधिकास्ते तु लेशा ब्रह्मानन्दस्य बिन्दुवत् ॥ १३९ ॥
तस्मादियत्ता नैवास्य वक्तुं ध्यातुं च शक्यते । न बिभेत्येव तं विद्वान् जन्महेतोः कुतश्चन ॥ १४० ॥
पुण्यं नाकरवं कस्मात् पापं तु कृतवान् कुतः । इति चिन्ता तपत्यज्ञं ज्ञानिनं न तपत्यसौ ॥ १४१ ॥
तापकत्वं तयोर्विद्वानुपेक्षानुष्ठितं तयोः । आत्मानं प्रीणयन् बोधात्सुदृढीकुरुते धियम् ॥ १४२ ॥

—तैत्तिरीयकविद्याप्रकाशः

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

( शान्तिः )

सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै ।
तेजस्वि नावधीतमस्तु मा विद्विषावहै ।
ॐ शान्तिः शान्तिः शान्तिः ।
हरिः ॐ ।

इति श्रीकृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि ब्रह्म—आनन्द—वल्ली समाप्ता ॥ २ ॥

---

विशेषरूपेण शून्ये कृत्वाऽऽत्मानं स्पृणुत एव । कः? य एवं वेद यथोक्तमद्वैतमानन्दं ब्रह्म वेद, तस्याऽऽत्मभावेन दृष्टे पुण्यपापे निर्वीर्ये अतापके जन्मान्तरारम्भके न भवतः ।

इतीयमेवं यथोक्ताऽस्यां वल्ल्यां ब्रह्मविद्योपनिषत् सर्वाभ्यो विद्याभ्यः परमरहस्यं दर्शितमित्यर्थः । परं श्रेयोऽस्यां निषण्णमिति ।

(वा)

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवतः कृतौ तैत्तिरीयोपनिषदि ब्रह्म—आनन्द—वल्लीभाष्ये नवमोऽनुवाकः ॥ ९ ॥

---

ब्रह्मविदिदमेकवि ँ शतिरन्नादन्नरसमयात्प्राणो व्यानोऽपान आकाशः पृथिवी पुच्छ ँ षड्वि ँ शतिः प्राणं यजुर्ऋक्सामाऽऽदेशोऽथर्वाङ्गिरसः पुच्छं द्वावि ँ शतिर्यतः श्रद्धर्त ँ सत्यं योगो महोऽष्टादश विज्ञानं प्रियं मोदः प्रमोद आनन्दो ब्रह्म पुच्छं द्वावि ँ शतिरसन्नेवाष्टावि ँ शतिरसत्षोडश भीषाऽस्मादेकपञ्चाशद्यतः कुतश्चैकादश ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्गोविन्दभगवत्पूज्यपादशिष्यशंकरभगवतः कृतौ तैत्तिरीयोपनिषद्भाष्ये ब्रह्म—आनन्द—वल्ली समाप्ता ॥ २ ॥

---

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दभगवत्पूज्यपादशिष्यानन्दज्ञानविरचिते तैत्तिरीयोपनिषच्छांकरभाष्यटिप्पणे ब्रह्म—आनन्द—वल्ली समाप्ता ॥ २ ॥

---

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

# अथ भृगुवल्ली

## ( ब्रह्ममीमांसा )

## अथ प्रथमोऽनुवाकः

हरिः ॐ ।

सह नाववतु । सह नौ भुनक्तु ।
सह वीर्यं करवावहै । तेजस्वि
नावधीतमस्तु मा विद्विषावहै ।
ॐ शान्तिः शान्तिः शान्तिः ।

( पुराणम्–उपाख्यानम् )

भृगुर्वै वारुणिः । वरुणं पितरमुपससार ।
अधीहि भगवो ब्रह्मेति ।

'सत्यं ज्ञानमनन्तं ब्रह्म' आकाशादिकार्यमन्नमयान्तं सृष्ट्वा तदेवानुप्रविष्टं
आनन्दवल्लीतात्पर्यार्थः विशेषवदिवोपलभ्यमानं यस्मात्, तस्मात् सर्वकार्यविल-
क्षणमदृश्यादिधर्मकमेवाऽऽनन्दं, तदेवाहमिति विजानीयात्—अनुप्रवेशस्य
तदर्थत्वात्; तस्यैवं विजानतः शुभाशुभे कर्मणी जन्मान्तरारम्भके न भवतः,
इत्येवमानन्दवल्ल्यां विवक्षितोऽर्थः । परिसमाप्ता च ब्रह्मविद्या ।

अतः परं ब्रह्मविद्यासाधनं तपो वक्तव्यम्, अन्नादिविषयाणि चोपासनान्य-
भृगुवल्लीप्रवृत्तिनिमित्तम् नुक्तानि, इत्यत इदमारभ्यते—

आख्यायिका विद्यास्तुतये, प्रियाय पुत्राय पित्रोक्तेति—भृगुर्वै वारुणिः ।
गुरूपसत्तिः 'वै' शब्दः प्रसिद्धानुस्मारकः—भृगुरित्येवंनामा प्रसिद्धो-
ऽनुस्मार्यते । वारुणिर्वरुणस्यापत्यं वारुणिर्वरुणं पितरं ब्रह्म विजिज्ञासुरुप-
ससारोपगतवान्—अधीहि भगवो ब्रह्मेत्यनेन मन्त्रेण । अधीहि—अध्यापय—
कथयेत्यर्थः । स च पिता विधिवदुपसन्नाय तस्मै पुत्रायैतद्वचनं प्रोवाच—
ब्रह्मबोधद्वारम्— "अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचम्" इति । 'अन्नं' शरीरं,
अन्तरङ्गसाधनम् तदभ्यन्तरं च 'प्राणं' अत्तारम्, अनन्तरमुपलब्धिसाध-
नानि चक्षुः, श्रोत्रं, मनः, वाचम्—इत्येतानि ब्रह्मोपलब्धौ द्वाराण्युक्तवान् ।

( १ ) ब्र. सू. ३. ४. २३–२४. ( २ ) °नुस्मर्य° इति पाठः ।

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

तस्मा॑ ए॒तत्प्रो॑वाच । अन्नं॑ प्रा॒णं चक्षु॒ः श्रोत्रं॑
मनो॒ वाच॒मिति॑ ।
त॑ꣳहो॑वाच । यतो॒ वा इ॒मानि॒ भूता॑नि॒ जाय॑न्ते ।
येन॒ जाता॑नि॒ जीव॑न्ति । यत्प्रय॑न्त्य॒भिसंवि॑-
शन्ति । तद्विजि॑ज्ञासस्व । तद्ब्रह्मेति॑ ।
स तपो॑ऽतप्यत । स तप॑स्त॒प्त्वा ।

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि भृगुवल्ल्यां
प्रथमोऽनुवाकः ॥ १ ॥

---

उक्त्वा च द्वारभूतान्येतान्यन्नादीनि, तं भृगुं होवाच ब्रह्मणो लक्षणम् । किं तत्? यतो यस्माद्वा इमानि ब्रह्मादीनि स्तम्बपर्यन्तानि भूतानि जायन्ते, येन जातानि जीवन्ति—प्राणान्धारयन्ति—वर्धन्ते, विनाशकाले च यत्प्रयन्ति यद्ब्रह्म प्रतिगच्छन्ति, अभिसंविशन्ति तादात्म्यमेव प्रतिपद्यन्ते, उत्पत्तिस्थितिलयकालेषु यदात्मतां न जहति भूतानि, तदेतद्ब्रह्मणो लक्षणम् ।

अन्नप्राणादीनि उपलक्षकाणि

तद्ब्रह्म विजिज्ञासस्व विशेषेण ज्ञातुमिच्छस्व—यदेवंलक्षणं ब्रह्म तदन्नादिद्वारेण प्रतिपद्यस्वेत्यर्थः । श्रुत्यन्तरं च—"प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो ये मनो विदुः, ते निचिक्युर्ब्रह्म पुराणमग्र्यम्" इति ब्रह्मोपलब्धौ द्वाराण्येतानीति दर्शयति ।

ब्रह्मजिज्ञासा

स भृगुर्ब्रह्मोपलब्धिद्वाराणि ब्रह्मलक्षणं च श्रुत्वा पितुः, तपो ब्रह्मोपलब्धिसाधनत्वेनातप्यत तप्तवान् । कुतः पुनरनुपदिष्टस्यैव तपसः साधनत्वप्रतिपत्तिर्भृगोः? सावशेषोक्तेः—अन्नादि ब्रह्मणः प्रति-

आध्यात्मिकं तपः साधकतमम्

---

वृत्तानुवादपूर्वकमुत्तरवल्लीसंबन्धमाह—सत्यं ज्ञानमित्यादिना । तप इति । पदार्थविवरणं वाक्यार्थज्ञानसाधनमित्यर्थः । अधीहीति । अध्यापय स्मारय । "इक्स्मरणे" इति धातुपाठादित्यर्थः । ब्रह्मोपलब्धाविति । लक्ष्यत्वमर्थविवेकाय द्वाराणि—शरीरादिचेष्टान्यथानुपपत्त्या हि साक्षिभूतश्चिदात्मा विविच्यत इति भावः ।

न केवलं[3] त्वमर्थज्ञानं वाक्यार्थज्ञानसाधनं, किंतु तत्पदार्थज्ञानमपीत्यभिप्रेत्य तदर्थस्य

---

(१) ब्र. सू. १. १. १–४. (२) बृ. उ. ४. ४. १८. (३) °लं लक्ष्यत्व° पाठः ।

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

## अथ द्वितीयोऽनुवाकः

### ( ब्रह्मविज्ञाने प्रथमपर्यायः )

अन्नस्य ब्रह्मत्वम् अन्नं ब्रह्मेति व्यजानात् । अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते । अन्नेन जातानि जीवन्ति । अन्नं प्रयन्त्यभिसंविशन्तीति ।

पत्तौ द्वारं, लक्षणं च 'यतो वा इमानि' इत्याद्युक्तवान्, सावशेषं हि तत्—साक्षाद्ब्रह्मणोऽनिर्देशात्; अन्यथा हि स्वरूपेणैव ब्रह्म निर्देष्टव्यं जिज्ञासवे पुत्राय—इदमित्थंरूपं ब्रह्म—इति । न चैवं निरदिशत् । किं तर्हि ? सावशेषमेवोक्तवान् । अतोऽवगम्यते नूनं साधनान्तरमप्यपेक्षते पिता ब्रह्मविज्ञानं प्रतीति । तपोविशेषप्रतिपत्तिस्तु सर्वसाधकतमत्वात्,—सर्वेषां हि नियतसाध्यविषयाणां साधनानां तप एव साधकतमं साधनमिति हि प्रसिद्धं लोके । तस्मात्पित्राऽनुपदिष्टमपि ब्रह्मविज्ञानसाधनत्वेन तपः प्रतिपेदे भृगुः । तच्च तपो बाह्यान्तःकरणसमाधानं—तद्द्वारकत्वाद्ब्रह्मप्रतिपत्तेः ।

"मनसश्चेन्द्रियाणां च ह्यैकाग्र्यं परमं तपः ।
तज्ज्यायः सर्वधर्मेभ्यः स धर्मः पर उच्यते ॥" इति स्मृतेः[1] ।

स च तपस्तप्त्वा—

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवतः कृतौ तैत्तिरीयोपनिषदि भृगुवल्लीभाष्ये प्रथमोऽनुवाकः ॥ १ ॥

---

अन्नं ब्रह्मेति व्यजानाद्विज्ञातवान् । तद्धि यथोक्तलक्षणोपेतम् । कथम् ? "अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते । अन्नेन जातानि जीवन्ति । अन्नं प्रयन्त्यभिसंविशन्तीति"—तस्माद्युक्तमन्नस्य ब्रह्मत्वमित्यभिप्रायः ।

---

ब्रह्मणो लक्षणमुक्तवानित्यर्थः । सावशेषोक्तेरिति । पदार्थोपलक्षणस्यैवाभिधानात्, अखण्डवाक्यार्थस्याप्रतिपादनात्, पदार्थभेदज्ञानाच्च पुरुषार्थासंभवात्, 'उदरमन्तरं कुरुते' इति निन्दितत्वात्; अतो वाक्यार्थावगतिपर्यन्तं तात्पर्येण लक्ष्यपदार्थविचारणमाद्दत्याऽनुष्ठितवानित्यर्थः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दशिष्यानन्दज्ञानविरचिते तैत्तिरीयोपनिषच्छांकरभाष्यटिप्पणे भृगुवल्ल्यां प्रथमोऽनुवाकः ॥ १ ॥

---

( १ ) मोक्षधर्मे २५०. ४; महा. भा. ३. २६०. २५.

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

तद्विज्ञाय । पुनरेव वरुणं पितरमुपससार ।
अधीहि भगवो ब्रह्मेति । तꣳ होवाच ।
तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति ।
स तपोऽतप्यत । स तपस्तप्त्वा ।

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि भृगुवल्ल्यां
द्वितीयोऽनुवाकः ॥ २ ॥

---

## अथ तृतीयोऽनुवाकः

( ब्रह्मविज्ञाने द्वितीयः पर्यायः )

प्राणो ब्रह्मेति व्यजानात् । प्राणाद्ध्येव खल्विमानि भूतानि जायन्ते । प्राणेन जातानि

स एवं तपस्तप्त्वा, अन्नं ब्रह्मेति विज्ञाय लक्षणेनोपपत्त्या च, पुनरेव संशयमापन्नो वरुणं पितरमुपससार—अधीहि भगवो ब्रह्मेति । कः पुनः संशयहेतुरस्य ? इत्युच्यते—अन्नस्योत्पत्तिदर्शनात् । तपसः पुनःपुनरुपदेशः साधनातिशयत्वावधारणार्थः । यावद्ब्रह्मणो लक्षणं निरतिशयं न भवति; यावच्च जिज्ञासा न निवर्तते, तावत्तप एव ते साधनम् । तपसैव ब्रह्म विजिज्ञासस्वेत्यर्थः । ऋज्वन्यत् ॥

(कार्यत्वप्रतीत्या अपरितोषः; तप एव साधनम्)

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवतः कृतौ तैत्तिरीयोपनिषदि भृगुवल्लीभाष्ये द्वितीयोऽनुवाकः ॥ २ ॥

---

स च तपस्तप्त्वेति । कुत्रेदं पित्रोक्तं लक्षणं ? क्वेदं लक्षणं वर्तते ? परिपूर्णं भवतीत्येकाग्रेण चेतसा पर्यालोच्य, 'अन्नं ब्रह्मेति व्यजानात्' अद्यते भुज्यत उपलभ्यते सर्वैरिति सर्वप्रतिपत्तृसाधारणं स्थूलदेहकारणं भूतपञ्चकं विराट्संज्ञकमन्नशब्देनोच्यते, तस्य स्थूलभौतिककारणत्वात् । 'यतो वा इमानि भूतानि' इतिलक्षणस्य तत्र योजयितुं शक्यत्वात्, तद्ब्रह्मेति प्रतिपन्नवानित्यर्थः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दशिष्यानन्दज्ञानविरचिते तैत्तिरीयोपनिषच्छांकरभाष्यटिप्पणे भृगुवल्ल्यां द्वितीयोऽनुवाकः ॥ २ ॥

---

विराज उत्पत्तिदर्शनाच्छ्रुतिस्मृतिषु, लक्षणं तत्र संपूर्णं न भवतीति पुनस्तपोऽतप्यत,

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

जीवन्ति । प्राणं प्रयन्त्यभिसंविशन्तीति ।
तद्विज्ञाय । पुनरेव वरुणं पितरमुपससार ।
अधीहि भगवो ब्रह्मेति । तꣳ होवाच ।
तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति ।
स तपोऽतप्यत । स तपस्तप्त्वा ।

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि भृगुवल्ल्यां
तृतीयोऽनुवाकः ॥ ३ ॥

---

## अथ चतुर्थोऽनुवाकः

( ब्रह्मविज्ञाने तृतीयः पर्यायः )

मनो ब्रह्मेति व्यजानात् । मनसो ह्येव खल्वि-
मानि भूतानि जायन्ते । मनसा जातानि
जीवन्ति । मनः प्रयन्त्यभिसंविशन्तीति ।
तद्विज्ञाय । पुनरेव वरुणं पितरमुपससार ।
अधीहि भगवो ब्रह्मेति । तꣳ होवाच ।
तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति ।
स तपोऽतप्यत । स तपस्तप्त्वा ।

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि भृगुवल्ल्या
चतुर्थोऽनुवाकः ॥ ४ ॥

---

विचार्य च तत्कारणं क्रियाशक्तिविशिष्टतया प्राणशब्दलक्ष्यं हिरण्यगर्भं संकल्पाध्यवसायश-
क्तिविशिष्टतया च मनोविज्ञानशब्दलक्ष्यम् 'ब्रह्मेति व्यजानात्'।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दशिष्यानन्दज्ञानविरचिते तैत्तिरीयोपनि-
षच्छांकरभाष्यटिप्पणे भृगुवल्ल्यां तृतीयोऽनुवाकः ॥ ३ ॥

---

(१) °विषयत° इति पाठः। (२) °शक्तिल° इति पाठः।

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

एकत्वसंख्याक्रान्तः। मानुषो मनुष्येषु भवः। आनन्दो भावरूपः सुखात्मा। नातः परं मनुष्याणां सुखमित्यर्थः। ते परोक्षाः। ये प्रसिद्धाः। शतं शतसंख्याका मानुषा आनन्दाः। व्याख्यातम्। वचनं तु विशेषः।

स परोक्षः प्रसिद्धः। एक एकत्वसंख्याक्रान्तः। मनुष्यगन्धर्वाणां मनुष्याः सन्तो जन्मान्तरे गन्धर्वत्वं प्राप्ता मनुष्यगन्धर्वा अन्तरिक्षलोकनिवासिनोऽन्तर्धानादिशक्तिमन्तस्तेषाम्। आनन्दः सुखात्मा। अस्माकं चक्रवर्तिनां यथोक्तगुणविशिष्टानां शतगुणसुखं मनुष्यगन्धर्वाणां परमं सुखमित्यर्थः। श्रोत्रियस्य चाधीतवेदस्याप्यवृजिनत्वं चात्रार्थसिद्धमिति न पठितम्। श्रोत्रियत्वं च चक्रवर्तिनोऽस्य च समानम्। चकारो मनुष्यगन्धर्वानन्दसमुच्चयार्थः। मनुष्यगन्धर्वानन्दप्राप्तौ कारणमाह—अकामहतस्य यथोक्तगुणविशिष्टचक्रवर्तिसुखकामेनानिपातितस्य तदभिलाषरहितस्येत्यर्थः।

यो हि यत्राभिलाषरहितस्तस्य तद्विषयप्राप्तेः शतगुणं सुखं भवतीत्यत एव प्रथमे पर्याये श्रोत्रियस्य चाकामहतस्येति न पठितम्।

**ते ये शतं मनुष्यगन्धर्वाणामानन्दाः। स एको देवगन्धर्वाणामानन्दः। श्रोत्रियस्य चाकामहतस्य। ते ये शतं देवगन्धर्वाणामानन्दाः। स एकः पितृणां चिरलोकलोकानामानन्दः। श्रोत्रियस्य चाकामहतस्य। ते ये शतं पितृणां चिरलोकलोकानामानन्दाः। स एक आजानजानां देवानामानन्दः। श्रोत्रियस्य चाकामहतस्य। ते ये शतमाजानजानां देवानामानन्दाः। स एकः कर्मदेवानां देवानामानन्दः। ये कर्मणा देवानपियन्ति। श्रोत्रियस्य चाकामहतस्य। ते ये शतं कर्मदेवानां देवानामानन्दाः। स एको देवानामानन्दः श्रोत्रियस्य चाकामहतस्य। ते ये शतं देवानामानन्दाः। स एक इन्द्रस्याऽऽनन्दः। श्रोत्रियस्य चाकामहतस्य। ते ये शतमिन्द्रस्याऽऽनन्दाः। स एको बृहस्पतेरानन्दः। श्रोत्रियस्य चाकामहतस्य। ते ये शतं बृहस्पतेरानन्दाः। स एकः प्रजापतेरानन्दः। श्रोत्रियस्य चाकामहस्य। ते ये शतं प्रजापतेरानन्दाः। स एको ब्रह्मण आनन्दः। श्रोत्रियस्य चाकामहतस्य।** देवगन्धर्वाणां देवाश्च ते गन्धर्वाश्च देवगन्धर्वास्तेषां चाऽऽकल्पगन्धर्वशरीरप्राप्तिहेतुभूतकर्मणामित्यर्थः। पितृणां, पितृविशेषणं चिरलोकलोकानां चिरादीर्घस्थायिनो लोकाः कर्मफलविशेषास्ते येषां लोकास्तत्स्थायिनः चिरलोकलोकास्तेषामनेककालस्थायिनामित्यर्थः। आजानजानां कल्पादावुत्पन्नानामाजाने देवलोके जाता आजानजास्तेषां, विशेषणमिदम्। विशेष्यमाह—देवानां द्योतनात्मकानाम्। कर्मदे-

(१) °लोकाः स्मार्तकर्मानुष्ठानपरा देवलोकं प्राप्तास्ते°। (२) °नां श्रौतकर्मानुष्ठातारोऽविद्वांसो देवत्वं प्राप्ताः क°।

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

वानाम् । इदं श्रुतिरेव व्याकरिष्यति । पूर्ववद्विशेषणमुक्त्वा विशेष्यमाह—देवानामाजानेभ्य उत्कृष्टानां द्योतनात्मकानाम् । कर्मदेवानामित्येतद्व्याकरोति । ये प्रसिद्धा याज्ञिकाः । कर्मणाऽग्निहोत्राद्यश्वमेधान्तेन देवान्द्योतनात्मकानपियन्ति प्राप्नुवन्ति देवत्वमुपगता इत्यर्थः । देवानां त्रयस्त्रिंशत्संख्याकानां हविर्भुजामग्न्यादीनाम् । इन्द्रस्य त्रिलोकीपत्युः ( तेः ) शक्रस्य । बृहस्पतेर्देवगुरोः । प्रजापतेर्विराजः । ब्रह्मणो हिरण्यगर्भस्य । नवसु पर्यायेषु प्रायः समानपाठम् । शेषं पूर्वं पूर्वं तदाद्यर्थत्वेन व्याकृत्य यथोचितं गन्धर्वादिपदैर्योजनीयम् । अकामहतत्वं च पूर्वपूर्वविषयत्वेन हिरण्यगर्भस्य यावानानन्दस्तावानानन्दो निरतिशयवैराग्य इति तात्पर्यार्थः । हिरण्यगर्भादुत्कृष्टस्य ब्रह्मानन्दस्य वाङ्मनसयोरगोचरत्वाद्धिरण्यगर्भानन्दमेव ब्रह्मानन्दसमुद्रस्योदबिन्दुसमं दिङ्मात्रमुक्त्वोपरराम श्रुतिः । अतः परं स्वयंप्रकाशानन्दात्मैव प्रमाणं नाहमिति श्रुतेरभिप्रायः ।

अनेन भावरूपो निरतिशयश्च ब्रह्मानन्द उक्तः । तथाऽपि स तु हिरण्यगर्भादपि परतो देहाद्युपाधिस्थो वा नास्मदादिरूप इत्यत आह—**सः** परोक्षो हिरण्यगर्भादुत्कृष्ट आनन्दः । यश्च प्रसिद्धोऽपि, **अयं** स्वयं प्रकाशमानः । **पुरुषे** पञ्चकोशात्मके पुरुषशब्दाभिधेये ब्रह्मपुच्छत्वेनोक्तः । यश्च प्रसिद्धोऽपि, **असौ** परोक्षोऽस्मदादीनां प्रत्यक्षश्च विदुषः । **आदित्ये** आदित्यमण्डले । चकारौ पुरुषादित्ययोर्वाचारम्भणमाहतुर्वाक्यद्वयगतौ । **स** आदित्ये पुरुषे च वर्तमानः । **एको** भेदरहितः । विदुषो ब्रह्मप्राप्तिरुक्ता यदेत्यादिना यद्यपि, तथाऽपि तत्त्वमसीतिनोक्तं तदर्थं प्रासङ्गिकमैक्यमभिधाय पुनस्तत्प्राप्तिमाह—**सो**ऽधिकारी । **यो** यः कश्चन । **एवंविदा**दित्ये पुरुषे च ब्रह्मानन्दमभेदेन विद्वान् । **अस्मात्** प्रत्यक्षात् । **लोका**द्दृष्टादृष्टसाधनफलात्मकात् । **प्रेत्य** प्रकर्षेणाऽऽगत्य मृतवदत्राभिलाषशून्य इत्यर्थः । **एतमन्नमयम**न्नविकारम् । **आत्मान**मिन्द्रियद्वारा विषयप्रापकम् । **उपसंक्रामति,** अन्नमयमध्यात्माधिदैवभेदाभिन्नमप्यध्यस्तं वस्तुतस्त्वहमेवेदमिति सामीप्येन सम्यगवगच्छति । **एतं प्राणमयमात्मानमुपसंक्रामति । एतं मनोमयमात्मानमुपसंक्रामति । एतं विज्ञानमयमात्मानमुपसंक्रामति । एतमानन्दमयमात्मानमुपसंक्रामति ।** स्पष्टम् । पर्यायचतुष्टयमन्नमयवद्व्याख्येयम् । सर्वात्मत्वज्ञानेनाऽऽनन्दं ब्रह्म प्राप्नोतीत्यर्थः । **तदपि** तस्मिन्पञ्चकोशाधिष्ठाने पुच्छरूपे ब्रह्मणि रसे सर्वानन्दातिशायिन्याधिदैवादिभेदशून्येऽहमस्मीत्यवगतेऽपिशब्दाद्यो हि यदात्मा भवति सोऽसौ तस्मान्न बिभेति । न च ब्रह्मणोऽन्यदत्रास्ति किंचिद्ब्रह्माऽऽत्मा चायं ततो नास्य भीतिः कुतश्चिदिति युक्तिरुक्ता । **एष श्लोको भवति** व्याख्यातम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरानन्दविरचितायां पदार्थबोधिन्यां तैत्तिरीयोपनिषद्दीपिकायां ब्रह्म-आनन्द-वल्ल्यामष्टमोऽनुवाकः ॥ ८ ॥

---

( १ ) उत्कृटानां ( २ ) °र्थः । देवाः समुच्चयकारिणो देवयानमार्गगामिनो देवाः । देवानां ।

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

# अथ नवमोऽनुवाकः

यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान्नबिभेति कुतश्चनेति । कुतश्चन कस्मादपि । शेषं समानपाठं मनोमयपर्यायवद्व्याख्येयम् । पूर्वं यतो मनसः कारणादिति व्याख्यातं मनोमयपर्यायप्रसङ्गात् । इदानीं संकोचे कारणाभावात्सर्वकारणादानन्दात्मन इति व्याख्येयम् । ननु—भीतिरहिताः सन्ति सहस्रशः पुण्यात्मानः संसारिण इत्यत आह—एतं ब्रह्मविदं ह प्रसिद्धं वावैव न तपति संतापं न कुरुते न संतापयतीत्यर्थः । मानसप्रत्यय इति शेषः । कुत्रेत्ययमभिनयेनाऽऽह—वृद्धादेः शोकजे विचारे किमहं क्षीणशक्तिः । साधु शोभनं पुण्यात्मकं कर्म । नाकरवं न कृतवान् । आः कष्टमिति शेषः । किमहं व्याख्यातम् । पापं श्रुत्यादिनिन्दितं कर्म । अकरवं कृतवान् । आः कष्टमिति शेषः । इत्यभिनयार्थः । अनेन प्रकारेण भयरहितानामपि संसारिणां पुण्यपापाभ्यां भीतिर्नास्य स्पृष्टेत्यभिप्रायः ।

ननु—तर्हि किं लोकायतिक इत्याशङ्क्य नेत्याह—सोऽधिकारी । यः प्रसिद्धः । एवं विद्वानहमेव निरतिशयज्ञानानन्दो न मत्तोऽन्यत्किंचिद्वस्तुभूतमस्तीति ज्ञानवान् । एते पुण्यपापे । आत्मानमानन्दात्मरूपं नैनं स्पृणुते प्रीणयति । सुकृतदुष्कृते अहमेवास्मीत्यवगच्छतीत्यर्थः । ततो न लोकायतिकसम इत्याह—उभे पुण्यपापे । हि यस्मादेवैष विद्वानेवैते आत्मानं स्पृणुते व्याख्यातम् । सर्वात्मत्वात्पुण्यपापानुष्ठानाननुष्ठानजन्यः न संतापो न तु लोकायतिकवन्नास्तिक्येनेत्यर्थः । तदेतदाह—य एवं वेद प्रसिद्धोऽधिकार्युक्तमानन्दरूपं निर्भेदमात्मत्वेन जानाति । य एवं वेदैष एवैते उभे आत्मानं स्पृणुते हीत्यन्वयः । ततो लोकायतिकाद्विलक्षण इति शेषः । इतिरानन्दवल्लीसमाप्तावुक्तात्मज्ञानानुकरणार्थो वा । उपनिषत्सर्वकारणं सर्वाधारभूतं निरतिशयानन्दैकस्वभावं निर्भेदमपगतसमस्तप्रपञ्चं ब्रह्माहमस्मीति सामीप्येन नितरां गमयित्वाऽहंममादिबन्धनानि शिथिलीकृत्याविद्यां सकार्यां ससंस्कारान्सादयति विनाशयतीत्युपनिषद्ब्रह्मविद्या प्रतिपादको ग्रन्थो वोपनिषत् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकारानन्दविरचितायां पदार्थबोधिन्यां
तैत्तिरीयोपनिषद्दीपिकायां ब्रह्म–आनन्द–वल्ल्यां नवमोऽनुवाकः ॥ ९ ॥

---

इति श्रीमत्परमहंसपरिव्राजकाचार्यानन्दात्मपूज्यपादशिष्यस्य श्रीशंकरानन्दस्य कृतौ
पदार्थबोधिन्यां तैत्तिरीयोपनिषद्दीपिकायां ब्रह्म–आनन्द–वल्ली समाप्ता ॥ २ ॥

---

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

# अथ भृगुवल्ली

## अथ प्रथमोऽनुवाकः

उक्ता ब्रह्मविद्या। ब्रह्मावगतौ चोपाया अन्नमयादयः पञ्च कोशाः। तांश्चेत्तथाऽवगन्तुमशक्तः कुतश्चित्प्रतिबन्धात्, तस्य तत्प्रतिबन्धकारणापाकरणभूतानि तप आदीनि। तपसि कारणे च ब्रह्मदृष्टिं विधातुं प्रसङ्गादुपासनान्तरार्थमपीयं वल्ल्यारभ्यते। तत्राऽऽख्यायिका गुरूपदेशादेर्ब्रह्मविद्याङ्गत्वं दर्शयितुं विद्यां स्तोतुं च। भृगुर्नामतः वै प्रसिद्धः। वारुणिर्वरुणस्यापत्यं वारुणिः। वरुणं वरुणनामानं पितरं भृगोर्जनकमुपससार शास्त्रदृष्टेन मार्गेण विद्यार्थं समीपमागतवान्। आगत्य चेदमूचे—अधीह्यध्ययनं कुरु। अयमर्थः—स्मरसि त्वं ब्रह्म, ततो मह्यं वद। भगवो भगवन् हे पूजावन्। ब्रह्मातिशयेन वृद्धं जगज्जन्मादिकारणमित्यनेन मन्त्रेणोपससार। अनन्तरं पिता तस्मै भृगव एतद्वक्ष्यमाणं प्रोवाच प्रकर्षेणोक्तवान्। अन्नमद्यतेऽत्ति च शरीरमध्यात्मादिभेदभिन्नम्। प्राणं शरीरान्तर्वर्तित्वेन वायुमत्तारमेव क्रियाशक्तिम्। इदानीं ज्ञानक्रियाशक्तीनि भोगसाधनान्याह—चक्षू रूपग्रहणकारणम्। श्रोत्रं शब्दोपलब्धिकारणम्। उपलक्षणमिदं त्वग्रसनघ्राणानाम्। मनः सर्वकरणसाधारणमन्तःकरणं ज्ञानशक्ति। वाचं वक्तव्यकारणभूताम्। उपलक्षणमिदं पाणिपादपायूपस्थानाम्। इत्यनेन प्रकारेण। अयमर्थः—भोग्यं भोक्ता भोगसाधनं चेति समग्रोऽपि प्रपञ्चस्तं ब्रह्मलक्षणं च कथयिष्यामि। यावच्चास्याऽऽत्मज्ञानं न भविष्यति तावत्पण्डितंमन्यः क्वचित्क्वचिद्ब्रह्मोपासनं करोतु। तेनोपासनेन क्षीणपापो (?) ब्रह्मावगन्तुं शक्यते न त्वन्यथेति। तदभिप्रायेण श्रुतिराह—तमुपदिष्टप्रपञ्चम्। ह किल। उवाचोक्तवान्वरुणः। यतोऽभिन्ननिमित्तोपादानात्। वै प्रसिद्धानि। इमानि विविधप्रत्ययगम्यानि। भूतान्याकाशादीनि स्वेदजादीनि च। जायन्त उत्पद्यन्ते। येन जीवनकारणेन जातान्युत्पन्नानि सन्ति जीवन्ति प्राणधारणोपलक्षितां स्थितिं कुर्वन्ति। यल्लयस्थानं घटस्येव मृत्। प्रयन्ति गच्छन्ति स्वस्वकार्यस्वभावं परित्यजन्ति सन्तीत्यर्थः। अभिसंविशान्ति सर्वतः सम्यक्प्रवेशं कुर्वन्ति। तदुक्तलक्षणं जगज्जन्मस्थितिध्वंसकारणम्। विजिज्ञासस्व विशेषेण 'अहं तदस्मि' इति ज्ञातुमिच्छां कुरु जानीहीत्यर्थः। ननु मया ब्रह्म पृष्टं, भवताऽन्यदुच्यत इत्यत आह—तदुक्तलक्षणं ब्रह्म ब्रह्मशब्दाभिधेयं नान्यदित्यर्थः। इतिः पितुर्वचनसमाप्तौ।

स श्रुतपितृवाक्यो भृगुः। तपः पर्यालोचनमन्नादिषूक्तेषु लक्षणाक्रान्तं कतमदित्येवं रूपम्। अतप्यत कृतवान्। अथवा स्वधर्मवृत्तित्वं तपः कृच्छ्रचान्द्रायणादि वा। अस्मिन्पक्षे

---

(१) °भूतम्—पाठः।

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

तपसा शुद्धान्तःकरणस्य मनस इन्द्रियाणां चैकाग्र्यं जायत इति व्याख्येयम् । स तापसः भृगुः । तप उक्तरूपम् । तप्त्वा संपाद्य ।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरानन्दविरचितायां पदार्थबोधिन्यां तैत्तिरीयोपनिषद्दीपिकायां भृगुवल्ल्यां प्रथमोऽनुवाकः ।

## अथ द्वितीयोऽनुवाकः ।

अतिस्थवीयबुद्धित्वेनान्नं ब्रह्मान्नमेव ब्रह्मलक्षणाक्रान्तं ब्रह्मशब्दाभिधेयम् । इत्यनेन प्रकारेण व्यजानाद्विशेषेणावगतवान् ।

तद्विज्ञानप्रकारं श्रुतिराह—अन्नादुक्तात् । हि यस्मात् । एवान्नादेव न त्वन्यस्मात् । खलु निश्चितम् । इमानि भूतानि जायन्ते । अन्नेन जातानि जीवन्ति । अन्नं प्रयन्त्यभिसंविशन्ति—व्याख्यातम् । यत्पदस्थलेऽन्नपदमिति विशेषः । इत्यनेन प्रकारेण । तदन्नं ब्रह्मरूपं विज्ञायावगत्य प्रत्यक्षेणोपपत्त्या चान्नस्य नाशमवलोक्यान्नताब्रह्मलक्षणाभ्यां संशयाविष्टहृदयः । पुनर्भूय एव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तꣳ होवाच—व्याख्यातम् । वरुणं पितरमुपससारैवेत्यन्वयः । तपसा व्याख्यातेन त्वया स्वयं ज्ञातेनोपायेनेत्यर्थः । ब्रह्म विजिज्ञासस्व पर्यालोचनेन ब्रह्मणोऽवगतिं कुरु ।

इदानीमुपायमुपेयदृष्ट्या स्तौति—तपो ब्रह्म ब्रह्मप्रतिपत्त्युपायभूतं तपो ब्रह्मोपेयमित्यनेनार्थादिदमुक्तम्—ब्रह्मज्ञानार्थिना नित्यानित्यवस्तुविवेकादिकं साधनं संपादनीयम् । तत्संपादयितुमशक्तश्चेत्तस्मिन्ब्रह्मदृष्टिं कुर्यादिति । अन्यथाऽत्र वक्ष्यमाणपर्यायत्रये च तपो ब्रह्मेत्यभिधानं व्यर्थं स्यात् । स तपोऽतप्यत । स तपस्तप्त्वा ।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरानन्दविरचितायां पदार्थबोधिन्यां तैत्तिरीयोपनिषद्दीपिकायां भृगुवल्ल्यां द्वितीयोऽनुवाकः ॥ २ ॥

## अथ तृतीयोऽनुवाकः

प्राणो ब्रह्मेति व्यजानात् । प्राणाद्ध्येव खल्विमानि भूतानि जायन्ते । प्राणेन जातानि जीवन्ति । प्राणं प्रयन्त्यभिसंविशन्तीति । तद्विज्ञाय । पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तꣳ होवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरानन्दविरचितायां पदार्थबोधिन्यां तैत्तिरीयोपनिषद्दीपिकायां भृगुवल्ल्यां तृतीयोऽनुवाकः ॥ ३ ॥

(१) °दिनाऽनुसंधानं—पाठः ।

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

## अथ चतुर्थोऽनुवाकः

मनो ब्रह्मेति व्यजानात् । मनसो ह्येव खल्विमानि भूतानि जायन्ते । मनसा जातानि जीवन्ति । मनः प्रयन्त्यभिसंविशन्तीति । तद्विज्ञाय । पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तꣳ होवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरानन्दविरचितायां पदार्थबोधिन्यां तैत्तिरीयोपनिषद्दीपिकायां भृगुवल्ल्यां चतुर्थोऽनुवाकः ॥ ४ ॥

## अथ पञ्चमोऽनुवाकः

विज्ञानं ब्रह्मेति व्यजानात् । विज्ञानाद्ध्येव खल्विमानि भूतानि जायन्ते । विज्ञानेन जातानि जीवन्ति । विज्ञानं प्रयन्त्यभिसंविशन्तीति । तद्विज्ञाय । पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तꣳ होवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरानन्दविरचितायां पदार्थबोधिन्यां तैत्तिरीयोपनिषद्दीपिकायां भृगुवल्ल्यां पञ्चमोऽनुवाकः ॥ ५ ॥

## अथ षष्ठोऽनुवाकः

आनन्दो ब्रह्मेति व्यजानात् । आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते । आनन्देन जातानि जीवन्ति । आनन्दं प्रयन्त्यभिसंविशन्तीति ।

यथाऽन्नस्य विनाशित्वं दोषो ब्रह्मत्वे, तथाऽचेतनत्वं प्राणस्य, अनिश्चयात्मकत्वं मनसः, सुखदुःखभोक्तृत्वं विज्ञानस्य च दोषः । यद्यपि चक्षुः श्रोत्रं मनो वाचमित्युपदिष्टं न विज्ञानमिति, तथाऽपि क्रियाशक्तीनां वागादीनां ज्ञानशक्तीनां च चक्षुरादीनां प्राणमनःसमानयोगक्षेमत्वात्पृथक्तद्विज्ञानं च नोक्तम् । मनसोऽपि विज्ञानतन्त्रत्वान्मनसाऽभिधीयमानत्वेन विज्ञानमप्यर्थादुक्तमेव । ततस्तद्दर्शनं दोषदृष्ट्या पितरं प्रत्यागमनं चेत्यविरुद्धम् । प्राणमनोविज्ञानानि प्राणमयमनोमयविज्ञानमयकारणान्यानन्दश्चाऽऽनन्दमयकारणम् । पुच्छं च तस्य ब्रह्मशब्दाभिधेयो मुख्यः । ततोऽस्य दर्शनानन्तरं पितरं प्रत्यागमनाभावः । स तप इत्यारभ्येतीत्यन्ताः प्राणमनोविज्ञानानन्दपर्यायाश्चत्वारोऽपि समानपाठा अन्नपर्यायवद्व्याख्येयाः ।

इदानीमाख्यायिकासिद्धमर्थं श्रुतिराह विद्यास्तुतये—सा प्रसिद्धा । एषेदानीमुक्ता । भार्गवी भृगुणाऽवगता भार्गवी । वारुणी वरुणेन प्रोक्ता वारुणी । विद्या ब्रह्मविद्या । परम उत्कृष्टे । व्योमन्व्योम्न्यानन्दात्मनि । प्रतिष्ठिताऽवस्थानं प्राप्ताऽऽनन्दात्मन्येव पर्यवसितेत्यर्थः ।

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

इदानीमानन्दात्मविज्ञानोक्तं फलमाह—[ स प्रसिद्धः । ] योऽधिकारी । एवमन्नप्राणमनोविज्ञानेभ्योऽन्तरतम आनन्दोऽहमस्मीति । वेद जानाति साक्षात्करोतीत्यर्थः । प्रतितिष्ठति—एवं ज्ञानवान्सोऽयमविद्यासंस्कारशून्यो ब्रह्मण्येवावतिष्ठते । अथवैवं प्रतिपत्तुमशक्तोऽन्नादिकोशपञ्चककारणे ब्रह्मदृष्टिं कुर्यात् । सोऽप्यन्तःकरणशुद्धिद्वाराऽस्मिञ्शरीरे शरीरान्तरे वा प्रतितिष्ठति ।

य एवं वेदेत्यनेनान्नादिषु ब्रह्मदृष्टेरप्यभिधातुं शक्यत्वात्तादृशस्य प्रलोभनार्थं दृष्टं फलान्तरमप्याह—अन्नवानित्यमन्नसंपन्नः । अन्नादोऽन्नभक्षको नीरोग इत्यर्थः । भवति स्पष्टम् । महानधिकः । भवति स्पष्टम् । कथं प्रजया पुत्रादिसंतत्या । पशुभिर्गवादिभिः । ब्रह्मवर्चसेन ब्राह्मणजात्युचिततेजसा । न केवलमेवं किंतु महानधिकः । कथं—कीर्त्या यशसा । प्रथमो महच्छब्दस्तस्मिन्विद्याधिक्यमाह । द्वितीयस्तु प्रजादीनां कीर्त्यन्तानाम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरानन्दविरचितायां पदार्थबोधिन्यां
तैत्तिरीयोपनिषद्दीपिकायां भृगुवल्ल्यां षष्ठोऽनुवाकः ॥ ६ ॥

---

## अथ सप्तमोऽनुवाकः

इदानीमस्यान्नब्रह्मोपासकस्य व्रतमाह—अन्नमदनीयं न निन्द्यान्निन्दां न कुर्यात् । तदन्नानिन्दनं व्रतं व्रतधारणम् । पूर्वमन्नमन्नादश्च यथास्थितमुपासनीयमिति सिद्धवत्कृत्येदानीं वैपरीत्यमाह—प्राणो वै पञ्चवृत्तिरेव । अन्नमदनीयम् । शरीरं स्थूलो देहः । अन्नादमन्नभक्षकम्, अन्नाश्रयत्वात् । प्राणे पञ्चवृत्तौ शरीरमुक्तं तदधीनस्थितित्वेन प्रतिष्ठितं प्रतिष्ठां प्राप्तम् ।

इदानीं वैपरीत्यमाह—शरीरे प्राणः प्रतिष्ठितः स्पष्टम् । तदुक्तम् । एतच्छरीरं प्राणरूपं प्रत्यक्षम् । अन्नमदनीयम् । शरीरं प्राणश्च अन्ने शरीरे प्राणे च प्रतिष्ठितमवस्थितं वंशतृणादिष्विव गृहं, गृहे च वंशतृणादि । स प्रसिद्धः यो यः कश्चनोपासकः । एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति । अन्नवानन्नादो भवति । महान्भवति । प्रजया पशुभिर्ब्रह्मवर्चसेन । महान्कीर्त्या । एतदन्नमन्ने प्रतिष्ठितं वेद जानाति जानीयादित्यर्थः । व्याख्यातमेतत् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरानन्दविरचितायां पदार्थबोधिन्यां
तैत्तिरीयोपनिषद्दीपिकायां भृगुवल्ल्यां सप्तमोऽनुवाकः ॥ ७ ॥

---

## अथाष्टमोऽनुवाकः

अन्नमुक्तं न परिचक्षीत दीयमानमन्नं न निराकुर्यात्पात्रस्थं वा न परित्यजेत् । तदन्ना-

---

( १ ) अत्रैवं । अथ चैवं—पाठान्तरे ।

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

परित्यागलक्षणं व्रतं व्रतधारणम्। इतः परं मनो विज्ञानं चेति वक्तव्यं यद्यपि, तथाऽपि तयोरपि भूतकार्यत्वात्प्राणशब्देन वायुभूतमङ्गीकृत्यान्नशब्देन भौतिकं भूतप्रसङ्गं प्रस्तावयति— **आपो वा अन्नम्। ज्योतिरन्नादम्। अप्सु ज्योतिः प्रतिष्ठितम्। ज्योतिष्यापः प्रतिष्ठिताः। तदेतदन्नमन्ने प्रतिष्ठितम्। स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति। अन्नवानन्नादो भवति। महान्भवति प्रजया पशुभिर्ब्रह्मवर्चसेन। महान्कीर्त्या।** आपो द्रवात्मिकाश्चतुर्गुणाः। ज्योतिः प्रकाशात्मकं त्रिगुणम्। शेषं प्राणशरीरपर्यायवत्समानपाठं व्याख्येयम्॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य श्रीमच्छंकरानन्दविरचितायां पदार्थबोधिन्यां तैत्तिरीयोपनिषद्दीपिकायां भृगुवल्ल्यामष्टमोऽनुवाकः॥ ८॥

## अथ नवमोऽनुवाकः

अन्नमुक्तं बह्वधिकं शास्त्रोक्तैरुपायैर्याजनादिभिः **कुर्वीत** स्पष्टम्। तदन्नबहुकरणं व्रतं व्रतधारणम्। **पृथिवी वा अन्नम्। आकाशोऽन्नादः। पृथिव्यामाकाशः प्रतिष्ठितः। आकाशे पृथिवी प्रतिष्ठिता। तदेतदन्नमन्ने प्रतिष्ठितम्। स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति। अन्नवानन्नादो भवति। महान्भवति। प्रजया पशुभिर्ब्रह्मवर्चसेन। महान्कीर्त्या।** पृथिवी कठिना पञ्चगुणा। आकाशश्छिद्रात्मा शब्दगुणः। शेषं समानपाठमब्ज्योतिः पर्यायवद्व्याख्येयम्॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरानन्दविरचितायां पदार्थबोधिन्यां तैत्तिरीयोपनिषद्दीपिकायां भृगुवल्ल्यां नवमोऽनुवाकः॥ ९॥

## अथ दशमोऽनुवाकः

**न** कंचन कमपि चण्डालान्तं ब्राह्मणादिकं **वसतौ** अद्य रात्रौ त्वद्गृहे वासं करिष्यामीति वसतिनिमित्तं समागतम्। **प्रत्याचक्षीत** न निराकुर्वीत। तद्वसतिनिमित्तं समागतानिवारणं व्रतं व्रतधारणम्। एवमेतान्युपासनानि सव्रतानि समानफलत्वादिच्छाविकल्पार्थानि उक्तफलकाम उक्तेष्वन्यतममुपासनं कुर्यादित्यवगम्यते। अत्र च भूतपञ्चकस्य भौतिकस्य च परस्परमुपकार्योपकारकभावकथनेन सर्वाद्वैते पर्यवसानं तद्दर्शितमिति तात्पर्यार्थः।

इदानीं ब्रह्मज्ञानोत्पादे सश्रद्धमन्नदानं कारणं, तथाऽन्नमन्तरेण कर्तुमशक्यं वसतावप्यप्रत्याख्यानं नान्नमन्तरेण स्यात्। न हि पूर्णोदरा अप्रार्थिता[1] वसत्यर्थं गृहस्थस्य गृहेष्वागच्छन्तो दृश्यन्ते। किंतु क्षुधार्ता एव। ततोऽन्नसंपादनार्थं गृहस्थाश्रमवासिना मुमुक्षुणाऽपि महान् यत्नः करणीय इत्याह—**तस्मा**द्यस्मादन्नमन्तरेण न पुरुषार्थसिद्धिर्गृहस्थस्य, ततो **यया कया च** येन केनापि **विधया**—उपायप्रकारेण याजनाद्यन्यतमेनेत्यर्थः। **बह्वधिकमन्नं**

(१) अप्रार्थितान्नाः—पाठः।

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

व्रीह्यादिकं प्राप्नुयाद्भवेत् । यद्यप्यन्नं बहु कुर्वीतेत्यनेनैव तदुक्तं तथाऽपि तद्व्रतमित्यभिधानादुपासनाङ्गोऽयं नियमविधिरितिबुद्धिनिवारणार्थं स्वातन्त्र्येण पुरुषार्थत्वं दर्शयितुं पुनराह । ननु—अन्नं स्वोपभोगायैव संपाद्यं न त्वन्यस्मै दानाय, प्रमाणाभावात्, इत्यत आह—अराध्यि संसिद्धम् । अस्मै गृहे समागतायातिथये । अन्नमदनीयम् । इत्यनेन प्रकारेण स्वभार्यादीन्प्रति । आचक्षते कथयन्ति विद्वांसो गृहस्थाः । अनेन गृहस्थप्रसिद्धिः प्रमाणमन्नदाने कथिता ।

इदानीं दीयमानेऽन्ने देशकालपात्रश्रद्धासत्कारादिसंपत्तिरङ्गमित्येतदर्थं यथा दत्तं तथैव फलं भवतीत्याह—एतद्वै प्रसिद्धम् । मुखतो मुखे मुख्ये देशे काले पात्रे च मुख्यया श्रद्धाप्रणिपातसत्कारादिरूपया वृत्त्या मुख्यमन्नमदनीयम् । राद्धं संसिद्धं दत्तमित्यर्थः । यदि तदा मुखतो मुख्ये देशे काले मुख्यया वृत्त्या मुख्यं मुख्याय । अस्मा अन्नस्य दात्रे । अन्नमदनीयम् । राध्यते संसिद्धं भवति । एतद्वै मध्यतोऽन्नꣳ राद्धम् । मध्यतोऽस्मा अन्नꣳ राध्यते । एतद्वा अन्ततोऽन्नꣳ राद्धम् । अन्ततोऽस्मा अन्नꣳ राध्यते । मध्यतो मध्यमदेशे काले पात्रे च मध्यमया वृत्त्या मध्यमम् । अन्ततोऽन्ते जघन्यदेशे काले पात्रे च जघन्यया वृत्त्या तिरस्कारादिरूपया जघन्यम् । व्याख्यातमन्यत्पर्यायद्वयेऽपि । यत्र देशे यस्मिन्काले यद्वर्णाश्रमिणे यादृशाचाराय यस्मिन्वयसि यद्दत्तमन्नमन्यद्वा दातुरपि तस्मिन्देशे तस्मिन्काले तद्वर्णाश्रमिणस्तादृशाचारस्य तस्मिन्वयसि तादृशं तदन्नमन्यद्वा संपद्यत इत्यर्थः ।

इदानीं यथोक्तविशेषणविशिष्टस्य दाने यत्फलमुत्कृष्टं तदेव तद्दानज्ञानेऽपीत्याह—योऽन्नदानस्य फलाभिज्ञः । एवमुक्तेन प्रकारेण । वेदान्नदानफलमुत्तममुपास्ते । सोऽपि मुखतोऽन्नं लभत इति शेषः । तस्मान्मुखतोऽन्नं देयमिति संदर्भार्थः । एवमन्नप्राणमनोविज्ञानानां कार्यरूपेण केनचित्कारणरूपेण चोपासनान्युक्त्वेदानीमानन्दस्य ब्रह्मण उपासनान्याह—क्षेमः प्राप्तस्य रक्षणम् । इत्यनेन प्रकारेण । वाचि वागिन्द्रिये मदीया वाग्ब्रह्मरूपेत्युपासीत । तदुपासनाच्च क्षेमरूपं फलमिति तात्पर्यार्थः । अत्र क्रियापदादर्शन उपासीतेत्यध्याहारः । फलादर्शने च गुणानुरूपं फलमिति सर्वत्रावगन्तव्यम् ।

**योगक्षेमः**—अप्राप्तस्य प्राप्तिर्हि योगः, प्राप्तस्य परिरक्षणं क्षेमः । तदुभयरूप आनन्दो योगक्षेमः । इत्यनेन प्रकारेण । प्राणापानयोः । स्पष्टम् । कर्म व्यापाररूपं ब्रह्म । इत्यनेन प्रकारेण । हस्तयोः स्पष्टम् । गतिर्गमनव्यापाररूपं ब्रह्म । इत्यनेन प्रकारेण । पादयोः स्पष्टम् । विमुक्तिर्मलविमोचनव्यापाररूपं ब्रह्म । इत्यनेन प्रकारेण । पायौ गुदेन्द्रिये ।

---

१) गृहस° (२) ब्राह्मणाः (३) °हस्थान्प्रति प्रमा° । (४) कथितम् । (५) वाक्केन ब्रह्म° ।



CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

इत्यध्यात्मोपासनासमाप्त्यर्थः । मानुषीर्मनुष्यसंबन्धिनीः । समाज्ञाः सम्यगाज्ञा उपासनाः । जानीयादिति शेषः ।

अथ मानुष्युपासनाकथनसमनन्तरम् । दैवीर्देवसंबन्धिनीः । समाज्ञा इत्यनुषङ्गः । कथयामीति शेषः । तृप्तिर्ब्राह्मणाशनपानजा तुष्टिः । इत्यनेन प्रकारेण । वृष्टौ वर्षकरमेघोदरान्निर्गतासु नीरधारासु । बलं ब्रह्मभूयसामर्थ्यभिभवकारणं सत्त्वम् । इत्यनेन प्रकारेण । विद्युत्यचिरप्रभायाम् । यशः कीर्तिरूपं ब्रह्म । इत्यनेन प्रकारेण । पशुषु गवादिषु । ज्योतिः प्रकाशरूपं ब्रह्म । इत्यनेन प्रकारेण । नक्षत्रेषूडुषु । प्रजातिर्ब्रह्म प्रजननरूपम् । अमृतं ब्रह्म प्रियालिङ्गनदर्शनादिरूपं मैथुनं क्षुद्रसुखरूपम् । आनन्दो ब्रह्म मैथुनक्रियानिर्वृतिजं सुखं पुत्रफलम् । इत्यनेन प्रकारेण । उपस्थ उपस्थेन्द्रिये । सर्वं निखिलमाकाशादिवाकायजातं ब्रह्म । इत्यनेन प्रकारेण । आकाशे भूताकाशेऽव्याकृते वा । तद्ब्रह्म । प्रतिष्ठा प्रतितिष्ठत्यस्मिन्कार्यकारणजातमिति प्रतिष्ठा सर्वाधार इत्यर्थः । इत्यनेन प्रकारेण । उपासीतोपासनं कुर्यात् ।

तत्र फलमाह—प्रतिष्ठावानाधारवान्भवति स्पष्टम् । तन्मह इत्युपासीत । महान्भवति । महो व्याहृतिरूपं तेजो वा । महान्सर्वस्मादभ्यधिकः । व्याख्यातमन्यत् । तन्मन इत्युपासीत । मानवान्भवति । मनः संकल्पविकल्पात्मकम् । मानोऽभिमानो मननं वा तद्वान् । अभिमानपक्षेऽखण्डिताभिमान इत्यर्थः । व्याख्यातमन्यत् । तन्नम इत्युपासीत । नमो नमनगुणवत् । व्याख्यातमन्यत् ।

तत्र फलमाह—नम्यन्ते नता भवन्ति प्राप्नुवन्तीत्यर्थः । अस्मै ब्रह्म नम इत्युपासकाय । कामाः कामनाविषयाः पुत्रादयः । तद्ब्रह्मेत्युपासीत । ब्रह्मवान्भवति । ब्रह्म परिवृढं वेदरूपं वा । तद्वान्ब्रह्मवान् । परिवृढपक्षे स्वयं परिवृढो भवतीत्यर्थः । व्याख्यातमन्यत् । तद्ब्रह्म(?) । ब्रह्मणोऽसङ्गोदासीनस्य । परिमरः परिम्रियन्ते विद्युद्वृष्टिश्चन्द्रमा आदित्योऽग्निरस्मिन्निति वायुः परिमरस्तज्जनक आकाशोऽपि परिमरः । अथवा सर्वविनाशकः कालः परिमरः । ब्रह्मणा संबद्धश्च स इत्याकाशः । परिमरगुणविशिष्टः काल एव वा । सर्वोपसंहारकार्ये । इति अनेन प्रकारेण । उपासीतोपासनं कुर्यात् । पर्येणं सर्वत उपासकं म्रियन्ते विनश्यन्ति । द्विषन्तो द्वेषं कुर्वन्तः । सपत्नाः कामादयो बाह्या वा वैरिणः । सपत्नीमातृजा वा । स्वस्य प्रिया अप्यसाधुत्वादज्ञानाद्वा । परि सर्वतः । ये प्रसिद्धाः । अप्रियाः कर्णनेत्रमनोदाहकाः । स्वस्य भ्रातृव्या वैरिणो द्विषन्तोऽपि, अयमस्माकं वैरी, अस्यानिष्टमस्माभिः करणीयमित्युपासके संकल्पवन्तः, उपासको वैते मयि वैरिण इति संकल्पं करोति येषु वैरमकुर्वाणेष्वपि, ते सर्वे विनश्यन्तीत्यर्थः ।

---

(१) अपि सा° । (२) संकल्पयन्तः—पाठः ।

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

एवमानन्दे ब्रह्मण्युपासनान्युक्त्वेदानीं स्थिरचेतसमधिकारिणमुपलभ्य पूर्ववल्ल्युक्तमेवाधिदैवादिभेदरहितमानन्दात्मानमाह—**स यश्चायं पुरुषे । यश्चासावादित्ये । स एकः । स य एवंवित् । अस्माल्लोकात्प्रेत्य । एतमन्नमयमात्मानमुपसंक्रम्य । एतं प्राणमयमात्मानमुपसंक्रम्य । एतं मनोमयमात्मानमुपसंक्रम्य । एतं विज्ञानमयमात्मानमुपसंक्रम्य । एतमानन्दमयमात्मानमुपसंक्रम्य ।** व्याख्यातं पूर्ववल्ल्याम् । इयांस्तु विशेषः । पूर्वं विदेहकैवल्यस्याभिधानात्पञ्चकोशेषु ल्टः प्रयोगः । इदानीं तु जीवन्मुक्तेरभिधानात्तेष्वेव ल्यपः प्रयोगः ।

**इमान्भूरादीँल्लोकान्कर्मफलभूतान् । कामान्नी** कामं यथाभिलाषमन्नमदनीयमस्यास्तीति कामान्नी । **कामरूपी** कामं यथाभिलाषं रूपमस्यास्तीति कामरूपी । **अनुसंचरन्नात्मसाक्षात्कारमनु** इमाँल्लोकान्सम्यक्चरन्पर्यटन्मानुषेण शरीरेणाऽऽधिकारिकेण वा । एतद्वक्ष्यमाणं लोकानुग्रहार्थम् । **साम** समत्वप्रतिपादकं वचनं संसारशूलार्पितान्प्राणिनो निरीक्ष्य भृशं करुणाक्रान्तमना **गायन्नत्युन्नतान्शब्दान्कुर्वन् ।** दग्धपटन्यायेन शरीरं गृहीत्वाऽऽस्ते तिष्ठति । अतः संगच्छत हे जना मा संसारशूले पततेति श्रुतेः करुणावत्या मातुरिवाभिप्रायः । **हा३वु हा३वु हा३वु** लोकत्रयीस्थान्संबोधयति वचनत्रयेण । अहो अहो अहो इति प्लुतिः पदत्रयेऽप्याश्चर्यार्था । **अहम्**—आनन्दात्माऽसङ्गोदासीनोऽनाद्यनिर्वाच्याविद्यया । **अन्नमदनीयमुपभोग्यमित्यर्थः ।** इदं भूर्लोकस्थान्प्रति । **अहमन्नमहमन्नं** व्याख्यातम् । अन्तरिक्षस्वर्लोकस्थान्प्रति वचनद्वयम् । **अहं** व्याख्यातम् । **अन्नादोऽन्न**मत्तीत्यन्नादो भोक्ता । इदं भूर्लोकस्थान्प्रति । **अहमन्नादो३ऽहमन्नादः**—व्याख्यातम् । इदमन्तरिक्षस्वर्लोकद्वयस्थान्प्रति ।

इदानीं कीर्तिकारित्वमपि स्वस्यैवेति लोकत्रयीस्थान्प्राति पूर्ववत्कथयति—**अहꣳश्लोककृदहꣳश्लोककृदहꣳश्लोककृत् ।** श्लोकः कीर्तिस्तां करोतीति श्लोककृत् । व्याख्यातमन्यत् । पूर्वं वाक्यत्रयेण संबोधनेनान्नान्नादश्लोककृत्त्वमात्मन उक्त्वा लोकत्रयीं प्रति विभागेन इदानीमविभागेन कार्यकारणरूपत्वमात्मन आह—**अहमानन्दात्मा । अस्मि** भवामि । **प्रथमजाः** प्रथमजो हिरण्यगर्भ इत्यर्थः । **ऋता३स्य**—ऋतस्य मूर्तामूर्तात्मकस्य सत्यस्य प्रपञ्चस्य कर्ता प्रथमत इत्यर्थः । ऋता इति प्लुतिराश्चर्यार्था ।

ननु—संसारात्पूर्वं देवाः प्रसिद्धा इत्यत आह—**पूर्वं** प्रथमः । **देवेभ्यो** विराडवयवभूतेभ्योऽग्न्यादिभ्यः । **अमृतस्यामरणधर्मिणो वेदस्य । ना३भायि** नाभिर्मध्यं वेदरहस्यमित्यर्थः । अत्रापि नकारे प्लुतिराश्चर्यार्था । कार्यकारणहीनोऽसङ्गोदासीनोऽहं वेदगर्भ इत्येवं-

---

(१) यथा दग्धोऽपि पटः किंचित्कालपर्यन्तं स्वाकारं न जहाति, तथा ज्ञानाग्निदग्धकर्मा वासनाक्षयेण नष्टमपि शरीरं धृत्वा करुणाक्रान्तो गायन्नास्त इति भावः ।

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

रूप इति योऽन्नस्य दाताऽऽत्मनो वा सर्वाभिन्नस्य तत्त्वमसीत्यादिवाक्येभ्यो दाता क्षुधार्तेभ्यः संसारतापतप्तेभ्यो वा मा माम् । अन्नमानन्दात्मरूपं वा ददाति प्रयच्छति । स इत्थं दाता । इदित्थं दानं कुर्वन् । एवमनेन दानेन । आ३वा–अवोऽवतीत्यर्थः । अकारप्लुतिराश्चर्यार्था । मां सर्वाभिन्नमपि रक्षयतीति ।

ननु—अन्ने दीयमाने कथं भवान्दत्त इत्यत आह—अहमन्नं व्याख्यातम् । ननु—अन्नस्य दानेनाऽऽत्मनो वा [1]अन्नभक्षणजं । सुकृतं भवतु दातुः । यस्य तु तस्मिन्नभिलाषः स तु त्वामन्नमात्मानं वा परस्मै मा प्रयच्छतु । भक्षयतु स्वयं काममन्नं कोऽस्यानर्थ इत्यत आह—अन्नमदनीयं मां तद्रूपमात्मानं वाऽदत्त्वा । अदन्तं भक्षयन्तम् । आ३द्मि––अद्मि भक्षयाम्यन्नभक्षकम् । अकारे प्लुतिराश्चर्यार्था । सर्वाभिन्नोऽप्येवं भक्षयामीति ।

ननु यथा त्वमेनं भक्षयसि तथा त्वामप्यन्यः । यथा मण्डूकः क्षुद्रं जीवं तं सर्पः सर्पं मकरो विश्वस्य विचित्रशक्तिभूताक्रान्तत्वात्ततो न भवतः प्राप्तिः पुरुषार्थ इत्यत आह–अहमानन्दात्मा विश्वं निखिलं भुवनं भवन्त्यस्मिन्भूतानीति भवनं भवनमेव भुवनम् । अविद्यातत्कार्यतत्संस्कारजातं कार्यकारणरूपमित्यर्थः । अभ्यभवामभ्यभवं स्वकीयेनाऽऽनन्दात्मरूपेण देशकालवस्तुपरिच्छेदशून्येन चरमवृत्तिसाक्षात्कारविषयेण निखिलमिदमात्मरूपकारणेन परिभवामि । अतो न मम कश्चन भक्षकः किंत्वहमेव सर्वस्य । ततो न मत्प्राप्तिरपुरुषार्थ इत्यर्थः ।

ननु–सर्वाभेदेऽन्येभ्यः कस्त्वय्यतिशय इत्यत आह—सुवर्न । सुवर्णस्तत्समानवर्ण आदित्य इव सुवर्णः । ज्योतिर्ज्योतिः प्रकाशः स्वयंप्रकाशानन्दरूपोऽहं ततो मय्यतिशय इत्यर्थः । इदानीं श्रुतिराह–योऽधिकारी । एवमुक्तप्रकारमानन्दात्मानम् । वेद जानाति साक्षात्करोतीत्यर्थः । सोऽपीमाँल्लोकानित्यादिनोक्तं फलं प्राप्नोतीत्यभिप्रायः । इत्युपनिषत् । व्याख्यातं पूर्ववल्ल्याम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरानन्दविरचितायां पदार्थबोधिन्यां
तैत्तिरीयोपनिषद्दीपिकायां भृगुवल्ल्यां दशमोऽनुवाकः ॥ १० ॥

---

**इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमदानन्दात्मपूज्यपादशिष्यस्य श्रीशंकरानन्दभगवतः कृतौ पदार्थबोधिन्यां तैत्तिरीयोपनिषद्दीपिकायां भृगुवल्ली समाप्ता ॥ ३ ॥**

---

( १ ) त्वद्भक्षणजं—पाठः ।

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

## ( परिशिष्ट )

### ( १ ) अन्यदर्शनप्रामाण्यतारतम्यम्

अनेकभेदभिन्नानि तथा शास्त्रान्तराणि च ।
निर्ममे शंकरः साक्षात्सर्वज्ञः संग्रहेण तु ॥
अधिकारिविभेदेन नैकस्यैव सदा द्विजाः ।
तैस्तैरेते हि मार्गास्तु न हन्तव्या मनीषिभिः ॥
यथा तोयप्रवाहाणां समुद्रः परमावधिः ।
तथैव सर्वमार्गाणां साक्षान्निष्ठा महेश्वरः ॥
एकरूपा परा मुक्तिस्ततस्तद्विषया मतिः ।
एकरूपा भवेन्नैव नानारूपा भविष्यति ॥
वेदान्तः शंकरं साक्षान्निर्विशेषद्वयात्मना ।
वक्ति मार्गान्तरान्नैवं ततो विद्या तु वेदजा ॥
अतो मार्गान्तराज्जाता मतयो मुनिसत्तमाः ।
अविद्या नैव विद्याः स्युरिति सम्यङ्निरूपणम् ॥
तस्मान्मार्गान्तराणां तु प्रामाण्यं वेदवित्तमाः ।
मुक्तेरन्यत्र नात्रैव क्रमेणैवात्र मानता ॥
अतो वेदस्थितो मर्त्यो नान्यमार्गं समाश्रयेत् ।
वेदमार्गैकनिष्ठानां न किंचिदपि दुर्लभम् ॥
अत्रैव परमा मुक्तिर्भुक्तयश्चात्र पुष्कलाः ।
अतोऽधिकारिभेदेन मार्गा मानं न संशयः ॥
ईश्वरस्य स्वरूपे च बन्धहेतौ तथैव च ।
जगतः कारणे मुक्तौ ज्ञानादौ च तथैव च ॥
मार्गाणां ये विरुद्धांशा वेदान्तेन विचक्षणाः ।
तेऽपि मन्दमतीनां च महामोहावृतात्मनाम्
वाञ्छामात्रानुगुण्येन प्रवृत्ता न यथार्थतः ॥
दर्शयित्वा तृणं मर्त्यो धावन्तीं गां यथाऽग्रहीत् ।
दर्शयित्वा तथा क्षुद्रमिष्टं पूर्वं महेश्वरः ।
पश्चात्पाकानुगुण्येन ददाति ज्ञानमुत्तमम् ॥

—सूतसंहिता. ४. २२. ६–२६.

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

## ( २ ) अद्वैतदर्शनस्य मतान्तरैरविरोधः ।

स्वसिद्धान्तव्यवस्थासु द्वैतिनो निश्चिता दृढम् ।
परस्परं विरुध्यन्ते तैरयं न विरुध्यते ॥
अद्वैतं परमार्थो हि द्वैतं तद्भेद उच्यते ।
तेषामुभयथा द्वैतं तेनायं न विरुध्यते ॥

—माण्डूक्योपनिषत्कारिका ३. १७–१८.

प्रपञ्चस्य मिथ्यात्वं, जीवपरमात्मनोरेकत्वं, तस्य चाऽऽत्मनः सच्चिदानन्दरूपत्वं, अद्वितीयत्वं चेत्येतस्मिन्नर्थे तावद्वेदान्तानां तदनुसारिणां स्मृतीतिहासपुराणानां चैदंपर्यमविवादम् । अन्येषामपि तीर्थिकानामीदृग्विधव्यवहारमकुर्वतां प्रायेणैतदभिमतमेव। तथाहि—तत्र सांख्यपातञ्जलशैवास्तावदात्मनः सच्चिद्रूपत्वमङ्गीकुर्वते । यद्यपि व्यवहारदशायां प्रकृतिप्राकृतलक्षणप्रपञ्चस्य सत्यत्वमात्मनानात्वं च व्यवहरन्ति, तथापि कैवल्यदशायां स्वरूपप्रकाशव्यतिरेकेण तस्य सर्वस्यानवभानं वर्णयन्ति । आत्मयाथात्म्यज्ञानलक्षणायाःप्रकृतिपुरुषविवेकख्यातेर्हि कैवल्यम् । तथाविधज्ञानोत्तरकालं प्रकृतिप्राकृतार्थात्मकं जगत्सर्वथा न भातं चेत्, तदस्तित्वं कथं निर्धार्येत? —ज्ञेयसिद्धेर्ज्ञानाधीनत्वात् । अत आत्मयाथात्म्यज्ञानेन निवर्तितमेव तत् । तस्मात्प्रपञ्चस्याज्ञानस्य ज्ञाननिवर्त्यत्वेन मिथ्यात्वमभ्युपगन्तव्यम् । ज्ञाननिवर्त्यानां शुक्तिरूप्यादीनां मिथ्यात्वदर्शनात् । किंच "कृतार्थं तं प्रति नष्टमप्यनष्टं तत्साधारणत्वात्" इति पातञ्जलं सूत्रम् ( २. २२. ) । अनेन च प्रकृतिप्राकृतात्मकं जगन्मुक्तापेक्षयानष्टं, तदितरापेक्षया विद्यमानमेवेति पुरुषविशेषापेक्षया तस्याभावसद्भावौ प्रतिपाद्येते । तच्च तन्मिथ्यात्वेऽवकल्पते । पुरुषविशेषमपेक्ष्यैकस्यैव वस्तुनः सद्भावाभावयोः शुक्तिरूप्यादौ दर्शनात् । तत्र हि काचकामलादिदोषदूषितनेत्रः पुरुषः शुक्तौ रूप्यसद्भावं प्रतिपद्यते। तदितरस्तु शुक्तिस्वरूपमेव जानंस्तत्र रूप्याभावमवगच्छति । न हि पारमार्थिकं घटादि पुरुषविशेषं प्रति सद्भावासद्भावौ युगपत्प्राप्नोति । तस्मात्स्वरूपज्ञानपर्यन्तमनुवर्तमानस्य तत ऊर्ध्वमप्रतिभासमानस्य प्रपञ्चस्य वेदान्तिनामिव सांख्यादीनामप्यविशेषान्मिथ्यात्वं सिद्धम् । अथापि कस्मान्न व्यवहरन्तीति चेत्, श्रोतुर्बुद्धिसमाधानार्थमिति ब्रूमः । स खलु प्रथमत एव सर्वं मिथ्येत्युक्ते, कथमेतद्घटते ?—इति व्याकुलितमनस्को भवेत् । तन्मा भूदिति सत्यत्वव्यवहार एव केवलम् । आत्मनानात्वस्य जीवेश्वरभेदस्य च मुक्तावनवभात-

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

त्वेनैव प्रपञ्चवन्मिथ्यात्वम् । यदि व्यवहारदशायामेक एवाऽऽत्मेत्यभिधीयेत, तदा तत्तदुपाधिपरिकल्पनेन जीवेश्वरव्यवस्था सुखदुःखादिव्यवस्था च प्रयाससमर्थनीया स्यादित्यभिप्रायेणैव तन्नानात्ववर्णनम् । मुक्तौ तु वेदान्तिनामिव सांख्यादीनामपि केवलात्मस्वरूपप्रतिभास एव संमत इति परमार्थतोऽद्वितीयत्वमात्मनः सिद्धम् । व्यवहारमात्र औपाधिकं स्वाभाविकमिति केवलं विवादः ।

आनन्दरूपत्वं च पातञ्जलसूत्रभाष्यकारोदाहृतत्वाज्जैगीषव्योपाख्यानादवगम्यते ( ३. १८. ) । जैगीषव्यो हि परमयोगीश्वरो योगमहिम्नाऽणिमाद्यष्टैश्वर्यं प्राप्य बहून् ब्रह्मसर्गान् संस्मृत्य तत्र सर्वत्रोपरतो दिव्यज्ञानेन साक्षात्कृते स्वात्मतत्त्वे कृतप्रणिधानः परमर्षियोगैश्वर्यप्राप्तास्वणिमादिषु किं सुखमनुभूतं त्वया ?—इति पृष्टे, न किंचिदिति प्रत्युक्तवान् । अणिमाद्या विभूतिः केवलसुखात्मिका, कथमेवं वदसि ?—इति पृष्टः सन्नवोचत्—सत्यम् । सांसारिकसुखापेक्षयाऽणिमाद्यैश्वर्यमधिकसुखावहम् । कैवल्यापेक्षया तु दुःखात्मकमेवेति । एवं चात्यन्तानुकूलवेद्यत्वमात्मन उक्तं भवति । एतदेवात्मन आनन्दरूपत्वं नाम, तथाप्यानन्दरूप इति न व्यवहरन्ति । सुखेष्वेवानन्दशब्दस्य व्युत्पत्तेः ।

इत्थं नैयायिकवैशेषिकादीनामपि मते ज्ञानान्मोक्षः । मुक्तस्य स्वव्यतिरिक्तानात्मलक्षणजगतोऽप्रतिपत्तिः समानैवेति तैरपि सांख्यादिवदात्माद्वितीयत्वं, प्रपञ्चमिथ्यात्वं चावश्यमङ्गीकार्यम् । ब्रह्मेन्द्रादिपदादपि श्रेयस्त्वेन मुक्तेः प्रार्थ्यमानत्वादत्यन्तानुकूलवेद्यत्वं च । ननु ते नवगुणानामत्यन्तोच्छेदो मोक्ष इति मुक्तौ ज्ञानस्याप्यभावमिच्छन्ति। सत्यम् । आत्मस्वरूपचैतन्यस्यात्यन्तनिर्विकल्पकत्वात्तेषामनवभानाभिमानः। अत एव शून्यवादिनोऽनवभानमात्मैव नास्तीति प्रतिपन्नाः । शास्त्रज्ञदृष्ट्या प्रातर्गजाभावज्ञाने सत्येव यथा लौकिकजनस्यादर्शनाभिमानो ग्राहकविज्ञानस्य निर्विकल्पकत्वात्, एवमेवात्मस्वरूपचैतन्यस्यात्यन्तनिर्विकल्पकत्वाल्लौकिकज्ञानाभावविषयमेव मुक्तौ ज्ञानराहित्यवर्णनम् । शून्यवादेऽप्ययमेवाभिप्रायो योज्यः ।

विज्ञानवादिनस्तु क्षणिकज्ञानप्रवाह आत्मेति वर्णयन्ति । तेषां मतेऽपि सांवृतस्य विषयोपप्लवस्य विद्यया विनिवृत्तौ विशुद्धज्ञानसंतानोदयो मुक्तिः । उक्तं हि—धीसंततिः स्फुरति निर्विषयोपरागेति । संतानो नाम नानाव्यक्तीनां नैरन्तर्येण वर्तनम् । तच्चानुभवदशायां सैवेयं दीपज्वालेतिवदेकत्वेनानुभूयमानत्वम् । तथा चानु-

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

भवत आत्मन ऐक्ये सिद्धे युक्त्या यत्तस्य क्षणभङ्गसमर्थनं, तद्बाह्यार्थक्षणिकत्वसाधनाय—यत्सत् तत्क्षणिकमितिव्याप्तेरनैकान्तिकत्वपरिहारेण समर्थनार्थम् । न च प्रयोजनवशाद्वस्तुनोऽन्यथात्वं शास्त्रकर्ता कथं प्रतिपादयेदिति शङ्कनीयम् । यतो भाट्टाः स्वप्रकाशविज्ञानाकार एव घटादिः, न तु बाह्य इति बाह्यार्थास्तित्वमपलपतो बौद्धान्निराकर्तुं स्वानुभवसिद्धं ज्ञानस्य स्वप्रकाशत्वं परित्यज्य नित्यानुमेयतामाहुः । तथा सति ह्ययं घट इत्यादिज्ञानेषु ज्ञानव्यक्तेरप्रत्यक्षत्वात्प्रत्यक्षत्वेन प्रतीयमानो घटाद्याकारो बाह्यार्थस्तस्यैवेति तेषामभिप्रायः । एवं विज्ञानवादिनोऽपि योऽहमद्राक्षं स एवेदानीं स्पृशामीति पूर्वोत्तरक्षणयोरेकत्वप्रतिसंधानेनाऽऽत्मनः स्थायित्वे स्वानुभवसिद्धे यत्क्षणभङ्गसमर्थनं, तदुक्तप्रयोजनायैवेत्यस्मदुक्तार्थतात्पर्यं नैव व्याहन्यते ।

मीमांसकानां शास्त्रं तु भिन्नविषयत्वाद्यथोदीरितात्मस्वरूपं न विरुणद्धि । तथाहि—वेदाप्रमाण्यवादिनो बौद्धान्निराकृत्य तत्प्रामाण्यं समर्थयमाना भाट्टाः प्राभाकराश्च वेदोक्तं यागहोमादिकं निर्वर्त्य स्वर्गादौ तत्फलमुपभोक्तुं देहातिरिक्तः कश्चिदात्मा कर्ता भोक्तास्तीति तन्नास्तित्ववादिनश्चार्वाकादीन्निराचक्रुः । कर्तृत्वभोक्तृत्वविशिष्टात्मस्वरूपप्रतिपादनस्यैव स्वशास्त्रप्रतिपाद्ययागदानाद्यौपयिकत्वात् तावन्मात्रस्वरूपमात्मनस्तैः प्रतिपादितम् । न त्वौपनिषदं कर्तृत्वभोक्तृत्वादिसर्वविक्रियादिरहितं रूपम् । तदवगमस्य स्वशास्त्रे प्रयोजनाभावात् । तदुक्तं भगवद्भिर्भाष्यकारैः—"अनुपयोगादधिकारविरोधाच्च" इति ( ब्र. सू. १.१.१. ) । ननु कर्त्रात्मस्वरूपप्रतिपादनं तदतिरिक्तस्वरूपास्तित्वनिषेधपरं कस्मान्न भवति ? तदस्तित्वाङ्गीकारादिति ब्रूमः । तत्र तावद्भट्टाचार्याः—

इत्याह नास्तिक्यनिराकरिष्णुरात्मास्तितां भाष्यकृदत्र युक्त्या ।
दृढत्वमेतद्विषयश्च बोधः प्रयाति वेदान्तनिषेवणेन ॥

—श्लो. वा. आत्मवादे १४८.

गुरुमतानुसारिणा भवनाथेनाप्युक्तमर्थवादाधिकरणे—अथवा न वेदान्तानां चोदनैकवाक्यता । "अथातो ब्रह्मजिज्ञासा" ( ब्र. सू. १.१.१. ) इति शास्त्रान्तरस्थितेरिति । तस्मान्मीमांसकानामप्युपनिषदेकसमधिगम्यमद्वितीयब्रह्मात्मैकत्वमभिमतमेवेति तच्छास्त्रमप्यस्मदुक्तेऽर्थे पर्यवस्यति । एवं शास्त्रान्तरमागमान्तरं चास्मिन्नेवार्थे योजनीयम् ।

—तात्पर्यदीपिका. ४.८.२४-६.

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

# तैत्तिरीयोपनिषत्-अवतरणसूची.

| | |
|---|---|
| अकुर्वन् विहितं कर्म ... ... ... | मनुस्मृ. ११.४४ |
| अक्षितमसि ... ... ... ... | छां. उ. ३.१७.६. |
| अग्निमीळे पुरोहितम् ... ... ... | ऋ. सं. १.१.१. |
| अग्निहोत्रं जुहुयात् ... ... ... ... | ? |
| अग्निहोत्रं जुहोति ... ... ... ... | तै. सं. १.५.९.१. |
| अङ्गेषु स्तुतिः परार्थत्वात् ... ... ... | जै. सू. ४.३.१९. |
| अत एव चोपमा सूर्यकादिवत् ... ... | ब्र. सू. ३.२.१८. |
| अथ त्रयो वाव लोकाः ... ... ... | बृ. उ. १.५.१६. |
| अथ यत्रान्यत्पश्यति...तदल्पम् ... ... | छां. उ. ७. २४.१. |
| अथाऽत आदेशो नेति नेति ... ... ... | बृ. उ. २.३.६. |
| अथाऽतो धर्मजिज्ञासा ... ... ... | जै. सू. १.१.१. |
| अथाऽतो ब्रह्मणः परिमरः ... ... ... | ऐ. ब्रा. ८.५.२८. |
| अनुदिने जुहोति ... ... ... ... | ऐ. ब्रा. ५.५.४. |
| अनेन जीवेनात्मनानुप्रविश्य ... ... ... | छां. उ. ६. ३. २. |
| अन्धगोलाङ्गूलन्यायः ... ... ... | न्यायः |
| अन्धो मणिमविन्दत् ... ... ... | तै. आ. १.११.५. |
| अन्योऽसावन्योऽहमस्मि ... ... ... | बृ. उ. १.४.१०. |
| अपाणिपादो जवनो ग्रहीता ... ... ... | श्वे. उ. ३.१९. |
| अप्रतीकालम्बनान्नयतीति बादरायणः ... ... | ब्र. सू. ४.३.१५. |
| अब्राह्मणादध्ययनमापत्काले ... ... ... | मनुस्मृ. २. २४१-२ |
| अम्बुवदग्रहणात्तु न तथात्वम् ... ... ... | ब्र. सू. ३.२.१९. |
| अयमात्मा ब्रह्म ... ... ... ... | बृ. उ. ३.४.५. |
| अरुणया पिङ्गाक्ष्यैकहायन्या ... ... ... | तै. सं. ६.१.६.७;७.१.६.२. |
| अविद्यया मृत्युं तीर्त्वा ... ... ... | ई. उ. ११. |
| अष्टौ वसवः ... ... ... ... | तै. आ. १.९.१. |
| अस्तीत्येवोपलब्धव्यः ... ... ... | कठ. उ. ६.१३. |
| अस्थूलमनणु ... ... ... ... | बृ. उ. ३.८.८. |
| अहमेवैतत्पञ्चधात्मानं प्रविभज्य ... ... | प्र. उ. २.३. |
| अहं ब्रह्मास्मि ... ... ... ... | बृ. उ. १.४.१० |
| आकाशादौ सत्यता तावदेका ... ... ... | सं. शारीरके. १. १७८. |
| आचार्यस्तूहापोह- ... ... ... | उप. साह. गद्यप्रबन्धे |
| आत्मन्येवात्मानं पश्येत् ... ... ... | बृ. उ. ४.४.२३. |

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

| | |
|---|---|
| कथमसतः सज्जायेत ... ... ... | छां उ. ६.२.२. |
| कर्ता शास्त्रार्थवत्त्वात् ... ... ... | ब्र. सू. २.३.३३. |
| कर्मणा पितृलोकः ... ... ... ... | बृ. उ. १.५.१६. |
| कषायपक्तिः कर्माणि ... ... ... | मोक्षधर्मे. ३२६.२६. |
| कामाच्च नानुमानापेक्षा ... ... ... | ब्र. सू. १.१.१८. |
| कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ... ... | ब्र. सू. २.१.२६. |
| केवलो निर्गुणश्च ... ... ... ... | श्वे. उ. ६.११. |
| क्षेत्रज्ञं चापि मां विद्धि ... ... ... | भ. गी. १३.२. |
| ख्या प्रकथने ... ... ... ... | धा. पा. २. ५०. |
| गुहाहितं गह्वरेष्ठं पुराणम् ... ... ... | कठ–उ. २.१२. |
| गौः शुक्लश्चलो डित्थः ... ... ... | महाभा. 'ऋलृक्' शिवसूत्रे |
| चक्षिङः ख्याञ् ... ... ... ... | पा. सू. २.४.५४. |
| चक्षुर्मानुषं वित्तम् ... ... ... ... | बृ. उ. १.४.१७. |
| चत्वारि वाक्परिमिता पदानि ... ... ... | तै. ब्रा. २.८.८., ऋ. सं. मं. १. १६४. ४५. |
| चोदना हि भूतं, भवन्तं, भविष्यन्तम् ... ... | शाबरभा. १.२.२. |
| जनिकर्तुः प्रकृतिः... ... ... ... | पा. सू. १.४.३०. |
| जायते, अस्ति, विपरिणमते ... ... ... | निरुक्ते १.२. |
| ज्ञाते च वाचनं न ह्यविद्वान् विहितोऽस्ति... ... | जै. सू. ३.८.१८. |
| ज्ञात्वा देवं मुच्यते सर्वपाशैः ... ... ... | श्वे. उ. १.८. |
| ज्ञाननिर्मथनादेव पाशं दहति पण्डितः ... ... | कै. उ. ११. |
| ज्ञानमुत्पद्यते पुंसां ... ... ... ... | शांति–प. २०४.८. |
| तच्च विष्णोः परं रूपम् ... ... ... | विष्णु. पु. ६.८.५४. |
| तज्जलानिति शान्त उपासीत ... ... ... | छां. उ. ३.१४.१. |
| ततः परिवृत्तौ कर्मफलशेषेण ... ... ... | आप. ध. सू. २.२.३. |
| ततः शेषेण ... ... ... ... | गौ. ध. सू. २.११.२९. |
| तत्केन कं पश्येत् ... ... ... ... | बृ. उ. २.४.१४;४.५.१५. |
| तत्त्वमसि ... ... ... ... | छां. उ. ६.८.७. |
| तत्सत्यम् ... ... ... ... | छां. उ. ६.८.७. तै. उ. २.६. |
| तद्य इह रमणीयचरणाः ... ... ... | छां. उ. ५.१०.७. |
| तद्यथा शङ्कुना ... ... ... ... | छां. उ. २.२३.३. |
| तद्यथेह कर्मजितो लोकः क्षीयते ... ... | छां. उ. ८.१.६. |
| तनूनपातं यजति ... ... ... ... | तै. सं. २.६.१.२.; शत. ब्रा. १.४.४.१०. |
| तन्मनोऽकुरुत ... ... ... ... | बृ. उ. १.२.९. |
| तपसा कल्मषं हन्ति विद्ययामृतमश्नुते ... ... | मनुस्मृ. १२.१०४. |


CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

| | |
|---|---|
| भूतं द्रव्यं, भव्यं कर्म, भूतस्य च भव्यार्थता न्याय्या ... | शबरभाष्ये ६.१.१. |
| भूतं भव्यप्रधानं भवति ... ... ... | सं. शारीरके. १.१४३. |
| भूतस्य भव्याय ... ... ... ... | शाबरी. १.४८२. |
| भूतं भव्यायोपदिश्यते ... ... ... | शबरभाष्ये. ३.४.४०;४.१.१८. |
| भूतस्य भव्यार्थतायां दृष्टार्थता ... ... ... | शाबरी. २.१.४. |
| मध्यं ह्येषामङ्गानामात्मा ... ... ... | ऐ. आ. २.३.५. |
| मनसश्चेन्द्रियाणां च ... ... ... | मोक्षधर्मे. २५०.४. वनपर्व. २६०.२५ |
| मनो ब्रह्मेत्युपासीत ... ... ... ... | छां. उ. ३.१८.१. |
| मनोमयः प्राणशरीरः ... ... ... | छां. उ. ३.१४.२. |
| मन्त्रो हीनः स्वरतो वर्णतो वा ... ... ... | पा. शि. ५२; महाभा. १.१.१. |
| महद्यक्षं प्रथमजं वेद ... ... ... | बृ. उ. ५.४.१. |
| मृगतृष्णाम्भसि स्नातः ... ... ... | (?) |
| मृत्योः स मृत्युमाप्नोति ... ... ... | कठ. उ. २.१०. |
| मृल्लोहविस्फुलिङ्गाद्यैः ... ... ... | मां. उ. कारिका. ३. १५. |
| य एष एतस्मिन्मण्डले पुरुषः ... ... ... | बृ. उ. २.३.३. |
| यच्चाप्नोति यदादत्ते ... ... ... | लिङ्ग-पु. ७०.९६. |
| यत्र नान्यत्पश्यति ... ... ... ... | छां. उ. ७.२४.१. |
| यत्र ... नान्यद्विजानाति ... ... ... | छां. उ. ७. २४.१. |
| यत्र हि द्वैतमिव भवति ... ... ... | बृ. उ. २.४.१४;४.५.१५ |
| यथा च तक्षोभयथा ... ... ... ... | ब्र. सू. २.३.४०. |
| यथा ह्ययं ज्योतिरात्मा विवस्वान् ... ... | (?) |
| यदानन्त्यं प्रतिज्ञाय श्रुतिः ... ... ... | वाक्यवृत्तौ. ३३. |
| यदृच्छया चोपपन्नमद्यात् ... ... ... | श्रीमद्भाग. ११. १८. ३५. |
| यदेव विद्यया करोति ... ... ... | छां उ. १.१.१० |
| यदेव विद्ययेति हि ... ... ... ... | ब्र. सू. ४.१.१८. |
| यद्वदयो रसविद्धं ... ... ... ... | स्वात्मनिरूपणे. ५८. |
| यया यया भवेत्पुंसां व्युत्पत्तिः ... ... | बृ. उ. वार्तिके. १.४.४०२. |
| यस्य ज्ञानमयं तपः ... ... ... ... | मुं. उ. १.१.९. |
| यावद्ध्यस्मिन्शरीरे प्राणो वसति ... ... | कौ. उ. ३.२. |
| युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम् ... ... | गौ. सू. १.१.१६. |
| योनिः समुद्रो बन्धुः ... ... ... | तै. सं. |
| योऽनृतमभिवदति समूलो वा ... ... ... | प्र. उ. ६.१. |
| योऽयं दक्षिणेऽक्षन्पुरुषः ... ... ... | बृ. उ. २.३.५. |
| योऽयं पवते तमेताः पञ्चदेवताः परिम्रियन्ते ... | ऐ. ब्रा.८.५.२८. |
| यो वै स बहिर्धा पुरुषादाकाशः ... ... | छां उ. ३.१२.७. |

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

# अनुक्रमणिका





CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

# शुद्धपाठा अधिकपाठभेदाश्च

| पृष्ठे. | पंक्तौ. | |
|---|---|---|
| ३ | २ | आरब्धफलयोश्चोपभोगेन |
| ,, | ८ | °न्नेव जन्मन्यु° |
| ,, | १६ | शुद्धाशुद्धयोः |
| ४ | ६ | * इति शतुर्नानुपपत्तिः—"अकुर्वन् विहितं कर्म" इति |
| ५ | ४ | कर्मभ्यः, कर्मारभ्यः |
| ,, | १० | * इति न संभवति— |
| ६ | ३ | अपि अभावः |
| ,, | ६ | * कर्तृत्वोपरमे |
| ७ | १ | * °वल्ल्यां |
| ८ | १४ | * आचार्य च |
| ,, | ,, | * °संयोजनेन अवतु । |
| १० | १९ | * संहिताश्च महा° |
| ,, | २१ | यस्य तस्येदं |
| ११ | १७ | * °नेति संधानम् । |
| १२ | टीकान्ते | * विरचिते |
| ,, | २ टिप्पण्यां | * तै. सं. |
| १४ | १० | * °विदिततत्त्व° |
| ,, | ११ | * °दिकं विज्ञानं |
| १५ | १७ | * एवं मां |
| ,, | ,, | * विघातः माभा° |
| १६ | १ टिप्पण्यां | * तुलय |
| १७ | २ टिप्पण्यां | * यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह । |

* इति चिह्नितः पाठः शुद्धो ज्ञेयः । चिह्नरहितः पाठभेदः ।

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

| पृष्ठे. | पंक्तौ. | |
|---|---|---|
| १९ | ८ | * °पूगेण |
| ,, | ११ | * अस्ति । व्याहृत्यनुवाके 'ता यो वेद' |
| २१ | १६ | * °अस्मै अङ्गिने बलिमा° |
| ,, | २३ | * वाऽऽत्मा |
| ,, | ,, | * °ण्यारमणमाक्रीडा |
| २५ | ४ टिप्पण्यां | * २. २३. ३ |
| २८ | १० | * रथीतरसगोत्रः |
| २८ | ९ | * अनुष्ठेयमिति |
| २९ | १२ | * सिक्तः, अमृतोक्षितोऽहम् । इतीत्यादि ब्राह्मणम् । |
| ,, | ,, | ४ टिप्पणी अनपेक्षिता । |
| ३४ | २० | * °तेषु—अभ्याख्याता अभ्युक्ता |
| ,, | ,, | * संयोजिताः |
| ३५ | ९ | * वाच्यस्य |
| ३६ | ५ | * प्रदर्श्यते |
| ३९ | ३ | * कर्मणः |
| ,, | १७ | * पश्यंति |
| ४१ | ८ | * ततः तत्फलोपभोगाय |
| ,, | ९ | * °नुपपत्तौ |
| ,, | २० | * °कीर्णानि विद्यन्ते |
| ४५ | १२ | संसारनिवृत्तावसत्यां |
| ४७ | ६ | * तस्यैव |
| ४८ | १० | * °योगीनिच' |
| ४९ | २ | * °मेव ब्रह्म |
| ५१ | २ | * यन्निश्चितं तत्तद्रूपं |
| ५२ | १ | * °त्र च सत्यम्' |
| ५२ | ४ | कर्त्रादि |
| ,, | १५ | विशेषणत्वे |

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

| पृष्ठे. | पंक्तौ. | |
|---|---|---|
| ५३ | १२ | प्रसङ्गश्च; |
| ,, | १९ | * °भास्याश्च |
| ६६ | १४ | * प्रति लीयन्ते |
| ६७ | १३ | * ' अन्न ' शब्दनिर्वचन° |
| ७१ | ९ | मनोमयो यथान्नमयः ; |
| ७३ | ७ | स्मृत्यावृत्तौ च क्रियमाणायां |
| ७४ | ५ | * अतिदेष्टव्य° |
| ,, | ,, | * अतिदिशतीति |
| ७७ | ६ | * पूर्वं या श्रद्धो° |
| ,, | ,, | * सा तस्य सर्वं° |
| ८० | २९ | * वैशेषिकादि° |
| ८१ | ९ | * श्रिते |
| ८३ | ११ | °तामापन्नः |
| ८४ | ६ | कास्त्याशङ्का |
| ,, | ७ | सर्वसमत्वाच्च |
| ८६ | १२ | * न नास्ति |
| ,, | १८ | * सजन्मा° |
| ८७ | ११ | किंच यथा |
| ८८ | ४ | कार्यकारण° |
| ८९ | ६ | °मवशिष्टम् |
| ९० | प्रान्तनाम्नि | * सर्गप्रवेशः |
| १०६ | टिप्पण्यां | * ( ४ ) बृ. उ. |
| १०८ | ,, | तैत्तिरीयकविद्याप्रकाशश्लोकाः १०९ पृष्ठेऽपेक्षिताः |
| १०९ | ,, | ,, १०८ पृष्ठेऽपेक्षिताः |
| १३१ | ९ | * °गुणोपासनात् |

दीपिका

| | | |
|---|---|---|
| ९. | टिप्पण्यां | * सायण |

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

